च दारुणासुरदारिणी ॥ ९१ ॥ दारुणाहवकर्त्री च दारुणाहव-
हर्षिता ॥ दारुणाहवहोमाढ्या दारुणाचलनाशिनी ॥ ९२ ॥
दारुणाचारनिरता दारुणोत्सवहर्षिना ॥ दारुणोद्यतरूपा च दारु-
णारिनिवारिणी ॥९३॥ दारुणेक्षणसँयुक्ता दोश्चतुष्कविराजिता ॥
दशदोष्का दशभुजा दशबाहुविराजिता ॥ ९४ ॥ दशास्त्रधारिणी
देवी दशदिक्ख्यातविक्रमा ॥ दशरथार्च्चितपदा दाशरथिप्रिया सदा
॥९५॥ दाशरथिप्रेमतुष्टा दाशरथिरतिप्रिया ॥ दाशरथिप्रियकरी
दाशरथिप्रियँव्वदा ॥ ९६ ॥ दाशरथीष्टसन्दात्री दाशरथीष्ट-
देवता ॥ दाशरथिद्वेषिनाशा दाशरथ्यानुकूल्यदा ॥ ९७ ॥
दाशरथिप्रियतमा दाशरथिप्रपूजिता ॥ दशाननारिसम्पूज्या दशान-
नारिदेवता ॥ ९८ ॥ दशाननारिप्रमदा दशाननारिजन्मभूः ॥
दशाननारिरतिदा दशाननारिसेविता ॥ ९९ ॥ दशाननारिसुखदा
दशाननारिवैरिहृत् ॥ दशाननारीष्टदेवी दशग्रीवारिवन्दिता
॥१००॥ दशग्रीवारिजननी दशग्रीवारिभाविनी ॥ दशग्रीवारि-
सहिता दशग्रीवसभाजिता ॥ १०१ ॥ दशग्रीवारिरमणी दशग्रीव-
वधूरपि ॥ दशग्रीवनाशकर्त्री दशग्रीववरप्रदा ॥ १०२ ॥ दश-
ग्रीवपुरस्था च दशग्रीववधोत्सुका ॥ दशग्रीवप्रीतिदात्री दशग्रीव-
विनाशिनी ॥ १०३ ॥ दशग्रीवाहवकरी दशग्रीवानपायिनी ॥
दशग्रीवप्रियावन्द्या दशग्रीवाहता तथा ॥ १०४ ॥ दशग्रीवाहित-
करी दशग्रीवेश्वरप्रिया ॥ दशग्रीवेश्वरप्राणा दशग्रीववरप्रदा॥१०५॥
दशग्रीवेश्वररता दशवर्षीयकन्यका ॥ दशवर्षीयबाला च दश-
वर्षीयवासिनी ॥१०६॥ दशपापहरा दम्या दशहस्तविभूषिता ॥
दशशस्त्रलसद्दोष्का दशदिक्पालवन्दिता ॥ १०७ ॥ दशावतार-
रूपा च दशावताररूपिणी ॥ दशविद्याभिन्नदेवी दशप्राणस्वरूपिणी
॥१०८॥ दशविद्यास्वरूपा च दशविद्यामयी तथा ॥ दृक्स्वरूपा

दक्प्रदात्री दग्रूपा दक्प्रकाशिनी ॥१०९॥ दिगन्तरा दिगन्तस्स्था दिगम्बरविलासिनी ॥ दिगम्बरसमाजस्था दिगम्बरप्रपूजिता ॥ ११० ॥ दिगम्बरसहचरी दिगम्बरकृतास्पदा ॥ दिगम्बरहृताचित्ता दिगम्बरकथाप्रिया ॥ १११ ॥ दिगम्बरगुणरता दिगम्बरस्वरूपिणी ॥ दिगम्बरशिरोधार्य्या दिगम्बरहृताश्रया ॥ ११२ ॥ दिगम्बरप्रेमरता दिगम्बररतातुरा ॥ दिगम्बरीस्वरूपा च दिगम्बरीगणार्च्चिता ॥ ११३ ॥ दिगम्बरीगणप्राणा दिगम्बरीगणप्रिया ॥ दिगम्बरीगणाराध्या दिगम्बरगणेश्वरी ॥११४॥ दिगम्बरगणस्पर्शमदिरापानविह्वला ॥ दिगम्बरीकोटिवृता दिगम्बरीगणावृता ॥ ११५ ॥ दुरन्ता दुष्कृतिहरा दुर्ध्येया दुरतिक्रमा ॥ दुरन्तदानवद्वेष्टी दुरन्तदनुजान्तकृत् ॥ ११६ ॥ दुरन्तपापहन्त्री च दस्रनिस्तारकारिणी ॥ दस्रमानससंस्थाना दस्रज्ञानविवर्द्धिनी ॥११७॥ दस्रसम्भोगजननी दस्रसम्भोगदायिनी ॥ दस्रसम्भोगभवना दस्रविद्याविधायिनी ॥ ११८ ॥ दस्रोद्वेगहरा दस्रजननी दस्रसुन्दरी ॥ दस्रभक्तिविधाज्ञाना दस्रद्विष्टविनाशिनी ॥११९॥ दस्रापकारदमनी दस्रसिद्धिविधायिनी ॥ दस्रताराराधिता च दस्रमातृप्रपूजिता ॥१२०॥ दस्रदैन्यहरा चैव दस्रतातनिषेविता ॥ दस्रपितृशतज्योतिर्दस्रकौशलदायिनी ॥ १२१ ॥ दशशीर्षारिसहिता दशशीर्षारिकामिनी ॥ दशशीर्षपुरी देवी दशशीर्षसभाजिता ॥ १२२ ॥ दशशीर्षारिसुप्रीता दशशीर्षवधूप्रिया ॥ दशशीर्षशिरश्छेत्री दशशीर्षनितम्बिनी ॥१२३॥ दशशीर्षहरप्राणा दशशीर्षहरात्मिका ॥ दशशीर्षहराराध्या दशशीर्षारिवन्दिता ॥ १२४ ॥ दशशीर्षारिसुखदा दशशीर्षकपालिनी ॥ दशशीर्षज्ञानदात्री दशशीर्षारिदेहिता ॥ १२५ ॥ दशशीर्षवधोपात्तश्रीरामचंद्ररूपता ॥ दशशीर्षराष्ट्रदेवी दशशीर्षारिसारिणी

॥१२६॥ दशशीर्षभ्रातृतुष्टा दशशीर्षनधूप्रिया ॥ दशशीर्षनधूप्राणा
दशशीर्षनधूरता ॥१२७॥ दैत्यगुरुरतामाध्वी दैत्यगुरुप्रपूजिता ॥
दैत्यगुरूपदेष्ट्री च दैत्यगुरुनिषेविता ॥ १२८ ॥ दैत्यगुरुगतप्राणा
दैत्यगुर्त्तापनाशिनी ॥ दुरन्तदुःखशमनी दुरन्तदमनीतमी
॥१२९॥ दुरन्तशोकशमनी दुरन्तरोगनाशिनी ॥ दुरन्तवैरिदमनी
दुरन्तदैत्यनाशिनी ॥१३०॥ दुरन्तकलुषघ्नी च दुःकृतिस्तोम-
नाशिनी ॥ दुराशया दुराधारा दुर्जया दुष्टकामिनी ॥ १३१ ॥
दर्शनीया च दृश्या च दृश्या च दृष्टिगोचरा ॥ दूतीयागप्रिया
दूती दूतीयागकरप्रिया ॥ १३२ ॥ दूतीयागकरानन्दा दूतीयाग-
सुखप्रदा ॥ दूतीयागकरायाता दूतीयागप्रमोदिनी ॥ १३३ ॥
दुर्व्वासःपूजिता चैव दूर्व्वासोमुनिभाविता ॥ दुर्व्वासोर्च्चित-
पादा च दुर्व्वासोमुनिभाविता ॥ १३४ ॥ दुर्व्वासोमुनिवन्द्या
च दुर्व्वासोमुनिदेवता ॥ दुर्व्वासोमुनिमाता च दुर्व्वासोमुनि-
सिद्धिदा ॥१३५॥ दुर्व्वासोमुनिभावस्था दुर्व्वासोमुनिसेविता ॥
दुर्व्वासोमुनिचित्तस्था दुर्व्वासोमुनिमण्डिता ॥ १३६ ॥ दुर्व्वासो-
मुनिसञ्चारा दुर्व्वासोहृदयङ्गमा ॥ दुर्व्वासोहृदयाराध्या दुर्व्वासो-
हृत्सरोजगा ॥१३७॥ दुर्व्वासस्तापसाराध्या दुर्व्वासस्तापसाश्रया ॥
दुर्व्वासस्तापसरता दुर्व्वासस्तापसेश्वरी ॥ १३८ ॥ दुर्व्वासोमुनि-
कन्या च दुर्व्वासोऽद्भुतसिद्धिदा ॥ दररात्री दरहरा दरयुक्ता
दरापहा ॥ १३९ ॥ दरघ्नी दरहन्त्री च दरयुक्ता दराश्रया
॥ १४० ॥ दरस्मेरा दरापाङ्गी दयादात्री दयाश्रया ॥ दस्रपूज्या
दस्रमाता दस्रदेवीदरोन्मदा ॥१४१॥ दस्रसिद्धा दस्रसंस्था दस्र-
तापविमोचिनी ॥ दस्रक्षोभहरा नित्या दस्रलोकगतात्मिका
॥१४२॥ दैत्यगुर्व्वङ्गनावन्द्या दैत्यगुर्व्वङ्गनाप्रिया ॥ दैत्यगुर्व्व-
ङ्गनासिद्धा दैत्यगुर्व्वङ्गनोत्सुका ॥ १४३ ॥ दैत्यगुरुप्रियतमा

दैत्यगुरुनिषेविता ॥ देवगुरुप्रस्वरूपा देवगुरुकृतार्हणा ॥ १४४ ॥ देवगुरुप्रेमयुता देवगुर्वनुमानिता ॥ देवगुरुप्रभावज्ञा देवगुरुसुखप्रदा ॥१४५॥ देवगुरुज्ञानदात्री देवगुरुप्रमोदिनी ॥ दैत्यस्त्रीगणसम्पूज्या दैत्यस्त्रीगणपूजिता ॥ १४६ ॥ दैत्यस्त्रीगणरूपा च दैत्यस्त्रीचित्तहारिणी ॥ देवस्त्रीगणपूज्या च देवस्त्रीगणवन्दिता ॥ १४७ ॥ देवस्त्रीगणचित्तस्था देवस्त्रीगणभूषिता ॥ देवस्त्रीगणसंसिद्धा देवस्त्रीगणतोषिता ॥ १४८ ॥ देवस्त्रीगणहस्तस्थचारुचामरवीजिता ॥ देवस्त्रीगणहस्तस्थ-चारुगन्धविलेपिता ॥१४९॥ देवाङ्गनाधृतादर्शदृष्टयर्थमुखचन्द्रमा ॥ देवाङ्गनोत्सृष्टनागवल्लीदलकृतोत्सुका ॥१५०॥ देवस्त्रीगणहस्तस्थदीपमालाविलोकना ॥ देवस्त्रीगणहस्तस्थ-धूपघ्राणविनोदिनी ॥ १५१ ॥ देवनारीकरगतवासकासवपायिनी ॥ देवनारीकङ्कतिका-कृतकेशनिमार्ज्जना ॥ १५२ ॥ देवनारीरुष्टगात्रा देवनारीकृतोत्सुका ॥ देवनारीविरचिता-पुष्पमालाविराजिता ॥१५३॥ देवनारीविचित्राङ्गी देवस्त्रीदत्तभोजना ॥ देवस्त्रीगणगीता च देवस्त्रीगीतमोत्सुका ॥१५४॥ देवस्त्रीनृत्यसुखिनी देवस्त्रीनृत्यप्रदर्शिनी ॥ देवस्त्रीयोजितलमद्रत्नगदुपदाम्बुजा ॥ १५५ ॥ देवस्त्रीगणविस्तीर्ण-चारुतल्पनिषेदुषी ॥ देवनारीचारुकरा-कलिताङ्घ्र्यादिदेहिका ॥ १५६ ॥ देवनारीकरव्यग्र-तालवृन्तमरुत्सुखा ॥ देवनारीवेणुवीणा-नादसोत्कण्ठमानसा ॥१५७॥ देवकोटिस्तुतिनुता देवकोटिकृतार्हणा ॥ देवकोटिगीतगुणा देवकोटिकृतस्तुतिः ॥ १५८ ॥ दन्तदष्टयोद्वेगफला देवकोलाहलाकुला ॥ द्वेषरागपरित्यक्ता द्वेषरागविवर्जिता ॥१५९॥ दामपूज्या दामभूषा दामोदरविलासिनी ॥ दामोदरप्रेमरता दामोदरभगिन्यपि ॥ १६० ॥ दामोदरप्रसूर्दामोदरपत्नीपतिव्रता ॥ दामोदराभिन्नदेहा दामोदररतिप्रिया ॥ १६१ ॥

दामोदराभिन्नतनुर्दामोदरकृतास्पदा ॥ दामोदरकृतप्राणा दामोदर-गतात्मिका ॥१६२॥ दामोदरकौतुकाढ्या दामोदरकलाकला ॥ दामोदरालिङ्गिताङ्गी दामोदरकुतूहला ॥१६३॥ दामोदरकृताह्लादा दामोदरसुचुम्बिता ॥ दामोदरसुताकृष्टा दामोदरसुखप्रदा ॥१६४॥ दामोदरसहाढ्या च दामोदरसहायिनी ॥ दामोदरगुणज्ञा च दामोदरवरप्रदा ॥ १६५ ॥ दामोदरानुकूला च दामोदरनितम्बिनी ॥ दामोदरजलक्रीडा-कुशलादर्शनप्रिया ॥ १६६ ॥ दामोदरबलक्रीडा-त्यक्तस्वजनसौहृदा ॥ दामोदरलसद्रास-केलि-कौतुकिनी तथा ॥१६७॥ दामोदरभ्रातृका च दामोदरपरायणा ॥ दामोदरधरा दामोदरवैरिविनाशिनी ॥ १६८ ॥ दामोदरोपजाया च दामोदरनिमन्त्रिता ॥ दामोदरपराभूता दामोदरपराजिता ॥ १६९ ॥ दामोदरसमाक्रान्ता दामोदरहताशुभा ॥ दामोदरोत्सवरता दामोदरोत्सवावहा ॥१७०॥ दामोदरस्तन्यदात्री दामोदरगवेषिता ॥ दमयन्तीसिद्धिदात्री दमयन्तीप्रसाधिता ॥१७१॥ दमयन्तीष्टदेवी च दमयन्तीस्वरूपिणी ॥ दमयन्तीकृतार्च्चा च दमनर्षिविभाविता ॥ १७२ ॥ दमनर्षिप्राणतुल्या दमनर्षि-स्वरूपिणी ॥ दमनर्षिस्वरूपा च दम्भपूरितविग्रहा ॥ १७३ ॥ दम्भहन्त्री दम्भदात्री दम्भलोकविमोहिनी ॥ दम्भशीला दम्भहरा दम्भवत्परिमर्दिनी ॥ १७४ ॥ दम्भरूपा दम्भकरी दम्भसन्तान-दारिणी ॥ दत्तमोक्षा दत्तधना दत्तारोग्याथ दाम्भिका ॥१७५॥ दत्तपुत्रा दत्तदारा दत्तहारा च दारिका ॥ दत्तभोगा दत्तशोका दत्तहस्त्यादिवाहना ॥ १७६ ॥ दत्तमतिर्दत्तभार्य्या दत्तशास्त्राव-बोधिका ॥ दत्तपाना दत्तदाना दत्तदारिद्र्यनाशिनी ॥१७७॥ दत्तसौधावनीवासा दत्तस्वर्गा च दासदा ॥ दास्यतुष्टा दास्य-हरा दासदासीशतप्रदा ॥ १७८ ॥ दाररूपा दारवासा दारवासि-

हृदास्पदा ॥ दारवासिजनाराध्या दारवासिजनप्रिया ॥ १७९ ॥ दारवासिविनिर्णीता दारवासिसमर्च्चिता ॥ दारवास्याहृतप्राणा दारवास्यरिनाशिनी ॥ १८० ॥ दारवासिविघ्नहरा दारवासिविमुक्तिदा ॥ दाराग्निरूपिणी दारा दारकार्य्यरिनाशिनी ॥१८१॥ दम्पती दम्पतीष्टा च दम्पतीप्राणरूपिका ॥ दम्पतिस्नेहनिरता दाम्पत्यसाधनप्रिया ॥ १८२ ॥ दाम्पत्यसुखसेना च दाम्पत्यसुखदायिनी ॥ दम्पत्याचारनिरता दम्पत्यामोदमोदिता ॥१८३॥ दम्पत्यामोदसुखिनी दाम्पत्याह्लादकारिणी ॥ दम्पतीष्टपादपद्मा दाम्पत्यप्रेमरूपिणी ॥ १८४ ॥ दाम्पत्यभोगभवना दाडिमीफलभोजिनी ॥ दाडिमीफलसन्तुष्टा दाडिमीफलमानसा ॥ १८५ ॥ दाडिमीवृक्षसंस्थाना दाडिमीवृक्षवासिनी ॥ दाडिमीवृक्षरूपा च दाडिमीवनवासिनी ॥ १८६ ॥ दाडिमीफलसाम्योरुपयोधरविवर्जिता ॥ दक्षिणा दक्षिणारूपा दक्षिणारूपधारिणी ॥ १८७ ॥ दक्षकन्या दक्षपुत्री दक्षमाता च दक्षसूः ॥ दक्षगोत्रा दक्षसुता दक्षयज्ञविनाशिनी ॥ १८८ ॥ दक्षयज्ञनाशकर्त्री दक्षयज्ञान्तकारिणी ॥ दक्षप्रसूतिर्दक्षेज्या दक्षवंशैकपावनी ॥१८९॥ दक्षात्मजा दक्षसूनुर्दक्षजा दक्षजातिका ॥ दक्षजन्मा दक्षजनुर्दक्षदेहसमुद्भवा ॥ १९० ॥ दक्षजनिर्दक्षयागध्वंसिनी दक्षकन्यका ॥ दक्षिणाचारनिरता दक्षिणाचारतुष्टिदा ॥ १९१ ॥ दक्षिणाचारसंसिद्धा दक्षिणाचारभाविता ॥ दक्षिणाचारसुखिनी दक्षिणाचारसाधिता ॥ १९२ ॥ दक्षिणाचारमोक्षाप्तिर्दक्षिणाचारवन्दिता ॥ दक्षिणाचारशरणा दक्षिणाचारहर्षिता ॥ १९३ ॥ द्वारपालप्रिया द्वारवासिनी द्वारसंस्थिता ॥ द्वाररूपा द्वारसंस्था द्वारदेशनिवासिनी ॥ १९४ ॥ द्वारकारी द्वारधात्री दोषमात्रविवर्जिता ॥ दोषकरा दोषहरा दोषराशिविनाशिनी ॥ १९५ ॥ दोषाकरविभूषाढ्या

दोपाकरकपालिनी ।। दोपाकरसहस्राभा दोपाकरसमानना ।।१९६।। दोपाकरमुखीदिव्या दोपाकरकराग्रजा ।। दोपाकरसमज्योतिर्दोपाकरसुशीतला ।। १९७ ।। दोपाकरश्रेणि दोपसदृशापाङ्गवीक्षणा ।। दोपाकरेष्टदेवी च दोपाकरनिषेविता ।। १९८ ।। दोपाकरप्राणरूपा दोपाकरमरीचिका ।। दोपाकरोल्लसद्भाला दोपाकरसुहर्ष्पिणी ।। १९९ ।। दोपाकरशिरोभूपा दोपाकरवधूप्रिया ।। दोपाकरवधूप्राणा दोपाकरवधूर्म्मता ।। २०० ।। दोपाकरवधूप्रीता दोपाकरवधूरपि ।। दोपापूज्या तथा दोपापूजिता दोपहारिणी ।। २०१ ।। दोपाजापमहानन्दा दोपाजापपरायणा ।। दोपापुरश्चाररता दोपापूजकपुत्रिणी ।। २०२ ।। दोपापूजकवात्सल्यकारिणी जगदम्बिका ।। दोपापूजकवैरिघ्नी दोपापूजकविघ्नहृत् ।। २०३ ।। दोपापूजकसन्तुष्टा दोपापूजकमुक्तिदा ।। दमप्रसूनसम्पूज्या दमपुष्पप्रिया सदा ।। २०४ ।। दुर्योधनपूज्या च दुःशासनसमर्च्चिता ।। दण्डपाणिप्रिया दण्डपाणिमाता दयानिधिः ।। २०५ ।। दण्डपाणिसमाराध्या दण्डपाणिप्रपूजिता ।। दण्डपाणिगृहासक्ता दण्डपाणिप्रियंवदा।।२०६।। दण्डपाणिप्रियमता दण्डपाणिमनोहरा ।। दण्डपाणिहृतप्राणा दण्डपाणिसुसिद्धिदा ।।२०७।। दण्डपाणिपरामृष्टा दण्डपाणिप्रहर्ष्पिता ।। दण्डपाणिविघ्नहरा दण्डपाणिशिरोधृता ।। २०८ ।। दण्डपाणिप्राप्तचर्च्चा दण्डपाण्युन्मुखी सदा ।। दण्डपाणिप्राप्तपदा दण्डपाणिवरोन्मुखी ।। २०९ ।। दण्डहस्ता दण्डपाणिर्दण्डबाहुर्दरान्तकृत् ।। दण्डदोष्का दण्डकरा दण्डचित्तकृतास्पदा ।।२१०।। दण्डविद्या दण्डिमाता दण्डिखण्डकनाशिनी ।। दण्डिप्रिया दण्डिपूज्या दण्डिसन्तोषदायिनी ।। २११ ।। दस्युपूज्या दस्युरता दस्युद्रविणदायिनी ।। दस्युवर्गकृतार्हा च दस्युवर्ग-

विनाशिनी ॥ २१२ ॥ दस्युनिर्न्नाशिनी दस्युकुलनिर्न्नाशिनी तथा ॥ दस्युप्रियकरी दस्युनृत्यदर्शनतत्परा ॥ २१३ ॥ दुष्ट-दण्डकरी दुष्टवर्गविद्राविणी तथा ॥ दुष्टवर्गनिग्रहार्हा दूषकप्राण-नाशिनी ॥ २१४ ॥ दूषकोत्तापजननी दूषकारिष्टकारिणी ॥ दूषकद्वेषणकरी दाहिका दहनात्मिका ॥ २१५ ॥ दारुकारी-निहन्त्री च दारुकेश्वरपूजिता ॥ दारुकेश्वरमाता च दारुकेश्वर-वन्दिता ॥ २१६ ॥ दर्भहस्ता दर्भयुता दर्भकर्म्मविवर्जिता ॥ दर्भमयी दर्भतनुर्दर्भमन्त्रस्वरूपिणी ॥ २१७ ॥ दर्भकर्म्मा-चाररता दर्भहस्तकृताहंणा ॥ दर्भानुकूला दार्भर्य्या दर्व्वीपात्रा-नुदामिनी ॥ २१८ ॥ दमघोषप्रपूज्या च दमघोषवरप्रदा ॥ दमघोषसमाराध्या दावाग्निरूपिणी तथा ॥ २१९ ॥ दावाग्नि-रूपा दावाग्निनिर्न्नाशितमहाबला ॥ दन्तदंष्ट्रासुरकला दन्तचर्च्चित-हस्तिका ॥ २२० ॥ दन्तदंष्ट्रस्यन्दना च दन्तनिर्न्नाशितासुरा ॥ दधिपूज्या दधिप्रीता दधीचिवरदायिनी ॥ २२१ ॥ दधीचीष्ट-देवता च दधीचिमोक्षदायिनी ॥ दधीचिदैन्यहन्त्री च दधीचि-दरदारिणी ॥२२२॥ दधीचिभक्तिसुखिनी दधीचिमुनिसेविता ॥ दधीचिज्ञानदात्री च दधीचिगुणदायिनी ॥ २२३ ॥ दधीचि-कुलसम्भूषा दधीचिभुक्तिमुक्तिदा ॥ दधीचिकुलदेवी च दधीचि-कुलदेवता ॥ २२४ ॥ दधीचिकुलगम्या च दधीचिकुलपूजिता ॥ दधीचिसुखदात्री च दधीचिदीनहारिणी ॥ २२५ ॥ दधीचिदुःख-हन्त्री च दधीचिकुलसुन्दरी ॥ दधीचिकुलसम्भूता दधीचिकुल-पालिनी ॥ २२६ ॥ दधीचिदानगम्या च दधीचिदानमानिनी ॥ दधीचिदानसन्तुष्टा दधीचिदानदेवता ॥ २२७ ॥ दधीचिजय-सम्प्रीता दधीचिजपमानसा ॥ दधीचिजपपूजाढ्या दधीचिजप-मालिका ॥ २२८ ॥ दधीचिजपसन्तुष्टा दधीचिजपतोषिणी ॥

दधीचितपसाराध्या दधीचिशुभदायिनी ॥२२९॥ दूर्व्वा दूर्व्वा-
दलश्यामा दूर्व्वादलसमद्युतिः ॥ नाम्नां सहस्रन्दुर्गाया दादीना-
मिति कीर्त्तितम् ॥ २३० ॥ यः पठेत्साधकाधीशः सर्व्वसिद्धी-
र्ल्लभेत्तु सः ॥ प्रातर्म्मध्याह्नकाले च सन्ध्यायां नियतः शुचिः
॥ २३१ ॥ तथार्द्धरात्रसमये स महेश इवापरः ॥ शक्तियुक्तो
महारात्रौ महावीरः प्रपूजयेत् ॥२३२॥ महादेवीम्मकाराद्यैः
पञ्चभिद्र्द्रव्यसत्तमैः ॥ तत्पठेत्स्तुतिमिमां यस्स च सिद्धिस्वरूप-
धृक् ॥ २३३ ॥ देवालये श्मशाने च गङ्गातीरे निजे गृहे ॥
वाराङ्गनागृहे चैव श्रीगुरोस्सन्निधावपि ॥ २३४ ॥ पर्व्वते प्रान्तरे
घोरे स्तोत्रमेतत्सदा पठेत् ॥ दुर्गानामसहस्रं हि दुर्गां पश्यति
चक्षुषा ॥ २३५ ॥ शतावर्त्तनमेतस्य पुरश्चरणमुच्यते ॥ स्तुति-
सारो निगदितः किम्भूयः श्रोतुमिच्छसि ॥ २३६ ॥

इति श्रीकुलार्णवे दुर्गादकारादिसहस्रनामस्तोत्र समाप्तम् ।

इति शाक्तप्रमोदे दुर्गातन्त्र समाप्तम्

—:०:—

श्रीः

शिवहरराजधानीपतिश्रीराजादेवनन्दनसिंह-

बहादुरनराधिपसगृहीतविरचित-

शाक्तप्रमोदान्तर्गतं

चतुर्दशं

# शिवतन्त्रम्

उक्तराजगुरुवश्यपण्डितश्रीरघुराजदुबेजीद्वारा

संशोधितम्



तदेतत्

श्रीकृष्णदासात्मज-खेमराजेन

स्वकीये "श्रीवेंकटेश्वर" यन्त्रालये

मुद्रयित्वा प्रकाशितम्

★

शकाब्दा १८९४, संवत् २०२९

मुम्बई

श्रीगणेशाय नमः

# अथ शाक्तप्रमोदः

## अथ शिवतन्त्रम्



### अथ शिवध्यानम्

ध्यायेन्नित्यम्महेशं रजतगिरिनिभञ्चारुचन्द्रावतंसं
रत्नाकल्पोज्ज्वलाङ्गम्परशुमृगवराभीतिहस्तम्प्रसन्नम् ॥
पद्मासीनं समन्तात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं
विश्वाद्यं विश्वबीजन्निखिलभयहरम्पञ्चवक्त्रन्त्रिनेत्रम् ॥१॥



## अथ यन्त्रोद्धारः

अनुक्तकल्पे यन्त्रन्तु लिखेत्पद्मदलाष्टकम् ॥
षट्कोणकर्णिकन्तत्र वेदद्वारोपशोभितम् ॥



## अथ मन्त्रोद्धारः

नमस्कारं समुद्धृत्य वान्तं नेत्रसमन्वितम् ॥ वारुणम्मुखवृत्तञ्च चायुं लालाटसँय्युतम् ॥ अमुम्पञ्चाक्षरम्मन्त्रम्पञ्चकामफलप्रदम् ॥ प्रणवादिर्य्यदा देवि तदा मन्त्रः षडक्षरः ॥

## अथ मन्त्रः

ॐ नमश्शिवाय ।

## अथ पूजाप्रयोगः

प्रातः कृत्यादिकङ्कृत्वा पूजागृहङ्गत्वा आसने उपविश्य न्दीपम्प्रज्वाल्य ॐ दीं दीपनाथायनम इति दीपं सम्पूज्य भूताप-सर्प्पणङ्कृत्वा पूजामारभेत् ॥ तद्यथा ॥ अथ ध्यानम् ॥ बन्धूक-सन्निभन्देवन्त्रिनेत्रञ्चन्द्रशेखरम् ॥ त्रिशूलधारिणन्देवञ्चारुहासं सुनिर्म्मलम् ॥ १ ॥ कपालधारिणन्देवँ व्वरदाभयहस्तकम् ॥ उमया सहितं शम्भुन्ध्यायेत्सोमेश्वरं सदा ॥२॥ इति ध्यानम् ॥ अथावाहनम् ॥ आयाहि भगवञ्छम्भो शर्व्वं त्वङ्गिरिजापते ॥ प्रसन्नो भव देवेश नमस्तुभ्यं हि शङ्कर ॥ इत्यावाहनम् ॥ अथासनम् ॥

## अथ यन्त्रोद्धारः

अनन्तकल्पो [illegible] लिखे[illegible] ॥

उमया सहित शम्भुन्ध्यायेत्सामरेश्वरं सदा ॥२॥ इति ध्यानम् ॥ अथावाहनम् ॥ आयाहि भगवञ्छम्भो शर्वं त्वं गिरिजापते ॥ प्रसन्नो भव देवेश नमस्तुभ्यं हि शङ्कर ॥ इत्यावाहनम् ॥ अथासनम् ॥

विश्वेश्वर महादेव राजराजेश्वरप्रिय ॥ आसनन्दिव्यमीशान दास्ये-ऽहन्तुभ्यमीश्वर ॥ इत्यासनम् ॥ अथ पाद्यम् ॥ महादेव महेशान महादेव परात्पर ॥ पाद्यङ्गृहाण मद्दत्तम्पार्वतीसहितेश्वर ॥ इति पाद्यम् ॥ अथार्घ्यम् ॥ त्र्यम्बकेश सदाचार जगदादिविधायक ॥ अर्घ्यङ्गृहाण देवेश साम्ब सर्व्वार्थदायक ॥ इत्यर्घ्यम् ॥ अथाचमनीयम् ॥ त्रिपुरान्तक दीनार्त्तिनाशक श्रीकण्ठ शाश्वत ॥ गृहाणाचमनीयञ्च पवित्रोदककल्पितम् ॥ इत्याचमनीयम् ॥ अथ गोदुग्धस्नानम् ॥ मधुरङ्गोपयः पुण्यम्पटपूतम्पुरस्कृतम् ॥ स्नानार्थन्देवदेवेश गृहाण परमेश्वर ॥ इति दुग्धस्नानम् ॥ अथ दधिस्नानम् ॥ दुर्ल्लभन्दिवि सुस्वादु दधि सर्व्वप्रियम्परम् ॥ पुष्टिदम्पार्व्वतीनाथ स्नानाय प्रतिगृह्यताम् ॥ इति दधिस्नानम् ॥ अथ घृतस्नानम् ॥ घृतङ्गव्यं शुचि स्निग्धं सुसेव्यम्पुष्टिमिच्छताम् ॥ गृहाण गिरिजानाथ स्नानाय चन्द्रशेखर ॥ इति घृतस्नानम् ॥ अथ मधुस्नानम् ॥ मधुरम्मृदु मोहघ्नं स्वरभङ्गविनाशनम् ॥ महादेवेदमुत्सृष्टन्तव स्नानाय शङ्कर ॥ इति मधुस्नानम् ॥ अथ शर्करास्नानम् ॥ तापशान्तिकरी शीता मधुरास्वादसंयुता ॥ स्नानार्थन्देवदेवेश शर्करेयम्प्रदीयते ॥ इति शर्करास्नानम् ॥ अथ शुद्धोदकस्नानम् ॥ गङ्गा गोदावरी रेवा पयोष्णी यमुना तथा ॥ सरस्वत्यादि तीर्थानि स्नानार्थम्प्रतिगृह्यताम् ॥ अथ शतरुद्र्या स्नानम् ॥ तदुद्धारो यथा ॥ नमस्ते रुद्रसूक्तञ्च पुनः षोडशमेव च ॥ एष ते द्विर्नमस्ते द्विर्न्नवावि द्वयमेव च ॥ मीढुष्टमष्ट चत्वारि वयस्त्वमष्टमञ्जपेत् ॥ ॐ नमस्ते रुद्र मन्यव ऽउतो त ऽइषवे नमः ॥ बाहुभ्यामुत ते नमः ॥ १ ॥ या ते रुद्र शिवा तनूरघोराऽपापकाशिनी ॥ तया नस्तन्वा शन्तमया गिरिशन्ताभिचाकशीहि ॥ २ ॥ यामिषुङ्गिरिशन्त हस्ते

विभर्ष्यस्तवे ॥ शिवाङ्गिरित्र ताङ्कुरु मा हिꣳसीः पुरुषञ्जगत् ॥ ३ ॥ शिवेन व्वचसा त्वा गिरिशाऽच्छाव्वदामसि ॥ यथा नः सर्व्वमिज्जगदयक्ष्मꣳ सुमना ऽअसत् ॥ ४ ॥ अद्ध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् ॥ अहीँश्च सर्व्वाञ्जम्भयन्त्सर्व्वाश्च यातुधान्न्योऽधराचीः परासुव ॥ ५ ॥ असौ यस्ताम्म्रो ऽअरुण ऽउत बभ्रुः सुमङ्गलः ॥ ये चैनꣳ रुद्रा ऽअभितो दिक्षु श्रिताः सहस्रशोऽवैषाꣳ हेड ऽईमहे ॥ ६ ॥ असौ योऽवसर्प्पति नीलग्ग्रीवो विलोहितः ॥ उतैनङ्गोपा ऽअदृश्रन्नदृश्रन्नुदहार्य्यः स दृष्टो मृडयाति नः ॥ ७ ॥ नमोऽस्तु नीलग्ग्रीवाय सहस्राक्षाय मीढुषे ॥ अथो ये ऽअस्य सत्त्वानोऽहन्तेभ्योऽकरन्नमः ॥ ८ ॥ प्रमुञ्च धन्वनस्त्वमुभयोरात्त्र्योर्ज्ज्याम् ॥ याश्च ते हस्त इषवः परा ता भगवो व्वप ॥९॥ विज्ज्यन्धनुः कपर्दिनो विशल्यो बाणवाँ२॥ ऽउत ॥ अनेशन्नस्य या ऽइषव ऽआभुरस्य निषङ्गधिः ॥ १० ॥ या ते हेतिर्म्मीढुष्टम हस्ते बभूव ते धनुः ॥ तयास्मान्विश्वतस्त्वमयक्ष्मया परिभुज ॥ ११ ॥ परि ते धन्वनो हेतिरस्मान्वृणक्तु विश्वतः ॥ अथो य ऽइषुधिस्तवारे ऽअस्मन्निधेहि तम् ॥ १२ ॥ अवतत्य धनुष्ट्वꣳ सहस्राक्ष शतेषुधे ॥ निशीर्य्य शल्यानाम्मुखा शिवो नः सुमना भव ॥ १३ ॥ नमस्त ऽआयुधायानातताय धृष्णवे ॥ उभाभ्यामुत ते नमो बाहुभ्यान्तव धन्वने ॥ १४ ॥ मा नो महान्तमुत मा नो ऽअर्भकम्मा न ऽउक्षन्तमुत मा न ऽउक्षितम् ॥ मा नो व्वधीः पितरम्मोत मातरम्मा नः प्रियास्तन्न्वो रुद्र रीरिषः ॥१५॥ मा नस्तोके तनये मा न ऽआयुषि मा नो गोषु मा नो ऽअश्वेषु रीरिषः ॥ मा नो व्वीरान् रुद्रभामिनो व्वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥ १६ ॥ नमो हिरण्यबाहवे सेनान्न्ये दिशाञ्च पतये नमो नमो वृक्षेभ्यो हरिकेशेभ्यः पशूना-

म्पतये नमो नमः शष्पिञ्जराय त्विषीमते पथीनाम्पतये नमो नमो हरिकेशायोपवीतिने पुष्टानाम्पतये नमः ॥ १७ ॥ नमो बभ्लुशाय व्याधिने ऽन्नानाम्पतये नमो नमो भवस्य हेत्यै जगताम्पतये नमो नमो रुद्रायाततायिने क्षेत्राणाम्पतये नमो नमः सूतायाहन्त्यै वनाना-म्पतये नमः ॥ १८ ॥ नमो रोहिताय स्थपतये वृक्षाणाम्पतये नमो नमो भुवन्तये वारिवस्कृतायौषधीनाम्पतये नमो नमो मन्त्रिणे वाणिजाय कक्षाणाम्पतये नमो नम उच्चैर्घोषायाक्रन्दयते पत्तीनाम्पतये नमः ॥ १९ ॥ नमः कृत्स्नायतया धावते सत्वनाम्पतये नमो नमः सहमानाय निव्याधिन आव्याधिनी-नाम्पतये नमो नमो निषङ्गिणे ककुभाय स्तेनानाम्पतये नमो नमो निचेरवे परिचरायारण्यानाम्पतये नमः ॥२०॥ नमो वञ्चते परिवञ्चते स्तायूनाम्पतये नमो नमो निषङ्गिण इषुधिमते तस्क-राणाम्पतये नमो नमः सृकायिभ्यो जिघांसद्भ्यो मुष्णताम्पतये नमो नमो ऽसिमद्भ्यो नक्तञ्चरद्भ्यो विकृन्तानाम्पतये नमः ॥२१॥ नम उष्णीषिणे गिरिचराय कुलुञ्चानाम्पतये नमो नम इषुमद्भ्यो धन्वायिभ्यश्च वो नमो नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमो नम आयच्छद्भ्योऽस्यद्भ्यश्च वो नमः ॥२२॥ नमो विसृजद्भ्यो विद्ध्यद्भ्यश्च वो नमो नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो नमः शयानेभ्य आसीनेभ्यश्च वो नमो नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमः ॥ २३ ॥ नमः सभाभ्यः सभापतिभ्यश्च वो नमो नमो ऽश्वेभ्यो ऽश्वपतिभ्यश्च वो नमो नम आव्याधिनीभ्यो विविद्ध्यन्तीभ्यश्च वो नमो नम उ-गणाभ्यस्तृंहतीभ्यश्च वो नमः ॥ २४ ॥ नमो गणेभ्यो गण-पतिभ्यश्च वो नमो नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नमो विरूपेभ्यो विश्वरूपेभ्यश्च

वो नमः ॥ २५ ॥ नमः सेनाभ्यः सेनानिभ्यश्च वो नमो नमो रथिभ्यो ऽअरथेभ्यश्च वो नमो नमः क्षत्तृभ्यः संग्रहीतृभ्यश्च वो नमो नमो महद्भ्यो ऽअर्भकेभ्यश्च वो नमः ॥ २६ ॥ नमस्तक्षभ्यो रथकारेभ्यश्च वो नमो नमः कुलालेभ्यः कर्म्मारेभ्यश्च वो नमो नमो निषादेभ्यः पुञ्जिष्ठेभ्यश्च वो नमो नमः श्वनिभ्यो मृगयुभ्यश्च वो नमः ॥ २७ ॥ नमः श्वभ्यः श्वपतिभ्यश्च वो नमो नमो भवाय च रुद्राय च नमः शर्व्वाय च पशुपतये च नमो नीलग्रीवाय च शितिकण्ठाय च ॥ २८ ॥ नमः कपर्द्दिने च व्युप्तकेशाय च नमः सहस्राक्षाय च शतधन्वने च नमो गिरिशयाय च शिपिविष्टाय च नमो मीढुष्टमाय चेषुमते च ॥ २९ ॥ नमो ह्रस्वाय वामनाय च नमो बृहते च वर्षीयसे च नमो वृद्धाय च सवृधे च नमोऽग्र्याय च प्रथमाय च ॥ ३० ॥ नम ऽआशवे चाजिराय च नमः शीघ्र्याय च शीभ्याय च नम ऽऊर्म्याय चावस्वन्याय च नमो नादेयाय च द्वीप्याय च ॥३१॥ नमो ज्येष्ठाय च कनिष्ठाय च नमः पूर्व्वजाय चापरजाय च नमो मध्यमाय चापगल्भाय च नमो जघन्याय च बुध्न्याय च ॥ ३२ ॥ नमः सोभ्याय च प्रतिसर्य्याय च नमो याम्याय च क्षेम्याय च नमः श्लोक्याय चावसान्याय च नम ऽउर्व्वर्य्याय च खल्याय च ॥ ३३ ॥ नमो वन्याय च कक्ष्याय च नमः श्रवाय च प्रतिश्रवाय च नम ऽआशुषेणाय चाशुरथाय च नमः शूराय चावभेदिने च ॥ ३४ ॥ नमो बिल्मिने च कवचिने च नमो वर्म्मिणे च वरूथिने च नमः श्रुताय च श्रुतसेनाय च नमो दुन्दुभ्याय चाहनन्याय च ॥ ३५ ॥ नमो धृष्णवे च प्रमृशाय च नमो निषङ्गिणे चेषुधिमते च नमस्तीक्ष्णेषवे चायुधिने च नमः स्वायुधाय च सुधन्वने च ॥ ३६ ॥ नमः

स्रुत्याय च पथ्याय च नमः काट्याय च नीप्याय च नमः कुल्याय च सरस्याय च नमो नादेयाय च वैशन्ताय च ॥३७॥ नमः कूप्याय चावट्याय च नमो वीध्र्याय चातप्याय च नमो मेघ्याय च विद्युत्याय च नमो वर्ष्याय चावर्ष्याय च ॥ ३८ ॥ नमो वात्याय च रेष्म्याय च नमो वास्तव्याय च वास्तुपाय च नमः सोमाय च रुद्राय च नमस्ताम्राय चारुणाय च ॥ ३९ ॥ नमः शङ्गवे च पशुपतये च नम उग्राय च भीमाय च नमोऽग्रेवधाय च दूरेवधाय च नमो हन्त्रे च हनीयसे च नमो वृक्षेभ्यो हरिकेशेभ्यो नमस्ताराय ॥ ४० ॥ नमः शम्भवाय च मयोभवाय च नमः शङ्कराय च मयस्कराय च नमः शिवाय च शिवतराय च ॥ ४१ ॥ नमः पार्य्याय चावार्य्याय च नमः प्रतरणाय चोत्तरणाय च नमस्तीर्थ्याय च कूल्याय च नमः शष्प्याय च फेन्याय च ॥ ४२ ॥ नमः सिकत्याय च प्रवाह्याय च नमः किꣳशिलाय च क्षयणाय च नमः कपर्दिने च पुलस्तये च नम इरिण्याय च प्रपथ्याय च ॥ ४३ ॥ नमो व्रज्याय च गोष्ठ्याय च नमस्तल्प्याय च गेह्याय च नमो हृदय्याय च निवेष्प्याय च नमः काट्याय च गह्वरेष्ठाय च ॥ ४४ ॥ नमः शुष्क्याय च हरित्याय च नमः पाꣳसव्याय च रजस्याय च नमो लोप्याय चोलप्याय च नम ऊर्व्याय च सूर्व्याय च ॥ ४५ ॥ नमः पर्णाय च पर्णशदाय च नम उद्गुरमाणाय चाभिघ्नते च नम आखिदते च प्रखिदते च नम इषुकृद्भ्यो धनुष्कृद्भ्यश्च वो नमो नमो वः किरिकेभ्यो देवानाꣳ हृदयेभ्यो नमो विचिन्वत्केभ्यो नमो विक्षिणत्केभ्यो नम आनिर्हतेभ्यः ॥ ४६ ॥ द्रापे अन्धसस्पते दरिद्र नीललोहित ॥ आमाम्प्रजानामेषाम्पशूनाम्मा भेर्म्मा रोङ्-

म्मो च न॒ऽ किश्चनाममत् ॥४७॥ इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः ॥ यथा शमसद्द्विपदे चतुष्पदे विश्वम्पुष्टङ्ग्रामे ऽअस्मिन्ननातुरम् ॥ ४८ ॥ या ते रुद्र शिवा तनूः शिवा विश्वाहा भेषजी ॥ शिवा रुतस्य भेषजी तया नो मृड जीवसे ॥ ४९ ॥ परि नो रुद्रस्य हेतिर्वृणक्तु परि त्वेषस्य दुर्म्मतिरघायोः ॥ अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृड ॥५०॥ मीढुष्टम शिवतम शिवो नः सुमना भव ॥ परमे वृक्ष ऽआयुधन्निधाय कृत्तिं व्वसान ऽआचर पिनाकम्बि-भ्रदागहि ॥ ५१ ॥ विकिरिद्र विलोहित नमस्ते ऽअस्तु भगवः ॥ यास्ते सहस्रꣳ हेतयो ऽन्यमस्मन्निवपन्तु ताः ॥ ५२ ॥ सहस्राणि सहस्रशो बाह्वोस्तव हेतयः ॥ तासामीशानो भगवः पराचीना मुखा कृधि ॥ ५३ ॥ असङ्ख्याता सहस्राणि ये रुद्रा ऽअधि भूम्याम् ॥ तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ५४ ॥ अस्मिन्महत्यर्णवे ऽन्तरिक्षे भवा ऽअधि ॥ तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ५५ ॥ नीलग्रीवाः शितिकण्ठा दिवꣳ रुद्रा ऽउपश्रिताः ॥ तेषाॅं सहस्रयोजनेऽव धन्वानि तन्मसि ॥५६॥ नीलग्रीवाः शितिकंठाः शर्व्वा ऽअधः क्षमाचराः ॥ तेषाॅं सहस्र-योजनेऽव धन्वानि तन्मसि ॥ ५७ ॥ ये भूतानामधिपतयो विशि-खासः कपर्दिनः ॥ तेषाॅं सहस्रयोजनेऽव धन्वानि तन्मसि ॥५८॥ ये वृक्षेषु शष्पिञ्जरा नीलग्रीवा व्विलोहिताः ॥ तेषाॅं सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ५९ ॥ ये पथाम्पथिरक्षय ऽऐलबृदा आयु-र्य्युधः ॥ तेषाॅं सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ६० ॥ ये तीर्थानि प्रचरन्ति सृकाहस्ता निषङ्गिणः ॥ तेषाॅं सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ६१ ॥ येऽन्नेषु व्विविद्ध्यन्ति पात्रेषु पिबतो जनान् ॥ तेषाॅं सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ६२ ॥ य

ऽस्तामन्तश्च भूम्यां मरुत्व दिशो रुद्रा वितस्थिरे ॥ तेषां सहस्र-
योजनेऽव धन्वानि तन्मसि ॥ ६३ ॥ नमोऽस्तु रुद्रेभ्यो ये दिवि
येषां वर्षमिषवः ॥ तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्द-
शोदीचीर्दशोर्ध्वाः ॥ तेभ्यो नमो ऽअस्तु ते नोऽवन्तु ते नो मृड-
यन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तमेषाञ्जम्भे दध्मः ॥६४॥ नमो-
ऽस्तु रुद्रेभ्यो ये ऽन्तरिक्षे येषां वात ऽइषवस्तेभ्यो दश प्राचीर्दश
दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः ॥ तेभ्यो नमो ऽअस्तु ते
नोऽवन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तमेषाञ्जम्भे
दध्मः ॥६५॥ नमोऽस्तु रुद्रेभ्यो ये पृथिव्यां येषामन्नमिषवः ॥
तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः ॥
तेभ्यो नमो ऽअस्तु ते नोऽवन्तु ते नो मृडयंतु ते यं द्विष्मो यश्च नो
द्वेष्टि तमेषाञ्जम्भे दध्मः ॥६६॥ नमस्ते रुद्र मन्यव ऽउतो त ऽइषवे
नमः ॥ बाहुभ्यामुत ते नमः ॥६७॥ या ते रुद्र शिवा तनूरघोराऽपाप-
काशिनी ॥ तया नस्तन्वा शन्तमया गिरिशन्ताभिचाकशीहि
॥ ६८ ॥ यामिषुङ्गिरिशन्त हस्ते बिभर्ष्यस्तवे ॥ शिवाङ्गिरित्र
ताङ्कुरु मा हिꣳसीः पुरुषञ्जगत् ॥ ६९ ॥ शिवेन वचसा त्वा
गिरिशाऽच्छावदामसि ॥ यथा नः सर्वमिज्जगदयक्ष्मꣳ सुमना
ऽअसत् ॥ ७० ॥ अद्ध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् ॥
अहींश्च सर्वाञ्जम्भयन्त्सर्वाश्च यातुधान्योऽधराचीः परासुव
॥७१॥ असौ यस्ताम्रो ऽअरुण ऽउत बभ्रुः सुमङ्गलः ॥ ये चैनꣳ
रुद्रा ऽअभितो दिक्षु श्रिताः सहस्रशो ऽवैषाँ हेड ऽईमहे ॥७२॥
असौ योऽवसर्पति नीलग्रीवो विलोहितः ॥ उतैनङ्गोपा ऽअदृश-
न्नदृश्रन्नुदहार्य्यः स दृष्टो मृडयाति नः ॥७३॥ नमोऽस्तु नील-
ग्रीवाय सहस्राक्षाय मीढुषे ॥ अथो ये ऽअस्य सत्वानोऽहन्तेभ्यो-
ऽकरन्नमः ॥ ७४ ॥ प्रमुञ्च धन्वनस्त्वमुभयोरार्त्न्योर्ज्याम् ॥ याश्च

ते हस्त ऽइषवः परा ता भगवो व्वप ॥ ७५ ॥ विज्यन्धनुः कपर्दिनो व्विशल्यो बाणवाँ२॥ उत ॥ अनेशन्नस्य या ऽइषव ऽआभुरस्य निषङ्गधिः ॥ ७६ ॥ या ते हेतिर्म्मीढुष्टम हस्ते बभूव ते धनुः ॥ तयाऽस्मान्विश्वतस्त्वमयक्ष्मया परिभुज ॥ ७७ ॥ परि ते धन्वनो हेतिरस्मान्वृणक्तु विश्वतः ॥ अथो यऽ इषुधिस्तवारे ऽअस्मन्निधेहि तम् ॥७८॥ अवतत्य धनुष्ट्वꣳ सहस्राक्ष शतेषुधे ॥ निशीर्य्य शल्यानाम्मुखा शिवो नः सुमना भव ॥७९॥ नमस्त ऽआयुधायानातताय धृष्णवे ॥ उभाभ्यामुत ते नमो बाहुभ्यान्तव धन्वने ॥ ८० ॥ मा नो महान्तमुत मा नो ऽअर्भकम्मा न ऽउक्षन्तमुत मा न ऽउक्षितम् ॥ मा नो व्वधीः पितरम्मोत मातरम्मा नः प्रियास्तन्वो रुद्र रीरिषः ॥८१॥ मा नस्तोके तनये मा न ऽआयुषि मा नो गोषु मा नो ऽअश्वेषु रीरिषः ॥ मा नो व्वीरान्रुद्रभामिनो व्वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥ ८२ ॥ एष ते रुद्र भागः सह स्वस्राऽम्बिकया तञ्जुषस्व स्वाहैष ते रुद्र भाग ऽआखुस्ते पशुः ॥८३॥ अव रुद्रमदीमह्यव देवन्त्र्यम्बकम् ॥ यथा नो व्वस्यसस्करद्यथा नः श्रेयस्करद्यथा नो व्यवसाययात् ॥ ८४ ॥ नमस्ते हरसे शोचिषे नमस्ते ऽअस्त्वर्चिषे ॥ अन्याँस्ते ऽअस्मत्तपन्तु हेतयः पावको ऽअस्मभ्यꣳ शिवो भव ॥८५॥ नमस्ते ऽअस्तु विद्युते नमस्ते स्तनयित्नवे ॥ नमस्ते भगवन्नस्तु यतः स्वः समीहसे ॥८६॥ न तँ व्विदाथ य ऽइमा जजानान्यद्युष्माकमन्तरम्बभूव ॥ नीहारेण प्रावृता जल्प्या चासुतृप ऽऽउक्थशासश्चरन्ति ॥ ८७ ॥ विश्वकर्म्मा ह्यजनिष्ट देव ऽआदिद्गन्धर्व्वो ऽअभवद्द्वितीयः ॥ तृतीयः पिता जनितौषधीनामपाङ्गर्भं व्व्यदधात्पुरुत्रा ॥ ८८ ॥ मीढुष्टम शिवतम शिवो नः सुमना भव ॥ परमे व्वृक्ष ऽआयुधन्निधाय कृत्तिं व्वसान

ऽआचर पिनाकम्बिभ्रदागहि ॥ ८९ ॥ विकिरिद्र व्विलोहित नमस्ते ऽअस्तु भगवः ॥ यास्ते सहस्रꣳ हेतयोऽन्यमस्मन्निवपन्तु ताः ॥ ९० ॥ सहस्राणि सहस्रशो व्वाह्वोस्तव हेतयः ॥ तासामीशानो भगवः पराचीना मुखा कृधि ॥ ९१ ॥ असङ्ख्याता सहस्राणि ये रुद्रा ऽअधि भूम्म्याम् ॥ तेषाँ सहस्रयोजनेऽव धन्वानि तन्मसि ॥९२॥ वयꣳ सोम व्रते तव मनस्तनूषु बिभ्रतः ॥ प्रजावन्तः सचेमहि ॥ ९३ ॥ एष ते रुद्र भागः सह स्वस्राऽम्बिकया तञ्जुषस्व स्वाहैष ते रुद्र भाग ऽआखुस्ते पशुः ॥९४॥ अव रुद्रमदीमह्यव देवन्त्र्यम्बकम् ॥ यथा नो वस्यसस्करद्यथा नः श्रेयसस्करद्यथा नो व्यवसाययात् ॥९५॥ भेषजमसि भेषजङ्गवेऽश्वाय पुरुषाय भेषजम् ॥ सुखम्मेषाय मेष्यै ॥९६॥ त्र्यम्बकं य्यजामहे सुगन्धिम्पुष्टिवर्द्धनम् ॥ उर्व्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् ॥ त्र्यम्बकं य्यजामहे सुगन्धिम्पतिवेदनम् ॥ उर्व्वारुकमिव बन्धनादितो मुक्षीय मामुतः ॥ ९७ ॥ एतत्ते रुद्राऽवसन्तेन परो मूजवतोऽतीहि ॥ ९८ ॥ त्र्यायुषञ्जमदग्नेः कश्यपस्य त्र्यायुषम् ॥ यद्देवेषु त्र्यायुषन्तन्नो ऽअस्तु त्र्यायुषम् ॥ ९९ ॥ शिवो नामासि स्वधितिस्ते पिता नमस्ते ऽअस्तु मा मा हिꣳसीः ॥ निवर्त्तयाम्यायुषेऽन्नाद्याय प्रजननाय रायस्पोषाय सुप्रजास्त्वाय सुवीर्य्याय ॥ १०० ॥ इति शुद्धोदकस्नानम् ॥ अथ वस्त्रम् ॥ वस्त्राणि पट्टकूलानि विचित्राणि नवानि च ॥ मयानीतानि देवेश प्रसन्नो भव शङ्कर ॥ इति वस्त्रम् ॥ अथोपवीतम् ॥ सौवर्ण्णं राजतन्ताम्रङ्कार्प्पासस्य तथैव च ॥ उपवीतम्मया दत्तं प्रीत्यर्त्थम्प्रतिगृह्यताम् ॥ इत्युपवीतम् ॥ अथ गन्धम् ॥ सर्व्वेश्वर जगद्वन्द्य दिव्यासनसमास्थित ॥ गन्धङ्गृहाण देवेश चन्दनम्प्रतिगृह्यताम् ॥ इति गन्धम् ॥ अथाक्षतान् ॥ गन्धोपरि शुक्लाक्षतान् ॥

अक्षताश्च सुरश्रेष्ठाः शुभ्रा धूताश्च निर्म्मलाः ॥ मया निवेदिता भक्त्या गृहाण परमेश्वर ॥ इत्यक्षतान् ॥ अथ पुष्पाणि ॥ माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो ॥ मयाहृतानि पूजार्त्थम्पुष्पाणि प्रतिगृह्यताम् ॥ इति पुष्पाणि । अथ बिल्वपत्राणि ॥ बिल्वपत्रं सुवर्ण्णेन त्रिशूलाकारमेव च ॥ मयार्पितम्महादेव बिल्वपत्रङ्गृहाण मे ॥ इति बिल्वपत्राणि ॥ अथ धूपम् ॥ वनस्पतिरसोत्पन्नो गन्धाढ्यो गन्ध उत्तमः ॥ आघ्रेयः सर्व्वदेवानान्धूपोऽयम्प्रतिगृह्यताम् ॥ इति धूपम् ॥ अथ दीपम् ॥ आज्यात्तवर्त्तिसंयुक्तं वह्निना दीपितन्तु यत् ॥ दीपङ्गृहाण देवेश त्रैलोक्यतिमिरापह ॥ इति दीपम् ॥ अथ नैवेद्यम् ॥ अपूपानि च पक्वानि मण्डका वटकानि च ॥ पायसं सूपमन्नञ्च नैवेद्यम्प्रतिगृह्यताम् ॥ इति नैवेद्यम् ॥ अथाचमनीयम् ॥ पानीयं शीतलं शुद्धङ्गाङ्गेयम्महदुत्तमम् ॥ गृहाण पार्व्वतीनाथ तव प्रीत्या प्रकल्पितम् ॥ इत्याचमनीयम् ॥ अथ करोद्वर्त्तनम् ॥ कर्पूरादीनि द्रव्याणि सुगन्धीनि महेश्वर ॥ गृहाण जगतान्नाथ करोद्वर्त्तनहेतवे ॥ इति करोद्वर्त्तनम् ॥ अथ फलानि ॥ कूष्माण्डम्मातुलिङ्गञ्च नारिकेलफलानि च ॥ गृहाण पार्व्वतीकान्त सोमशेखर शङ्कर ॥ इति फलानि ॥ अथ सपूगीफलताम्बूलादीनि ॥ पूगीफलम्महद्दिव्यन्नागवल्लीदलैर्य्युतम् ॥ गृहाण देवदेवेश द्राक्षादीनि सुरेश्वर ॥ इति पूगीफलादीनि ॥ अथ द्रव्यम् ॥ हिरण्यगर्ब्भगर्ब्भस्थं हेमबीजमनन्तम् ॥ पञ्चरत्नम्मया दत्तङ्गृह्यतां वृषभध्वज ॥ इति द्रव्यम् ॥ अथ नीराजनम् ॥ अग्निर्ज्ज्योती रविर्ज्ज्योतिर्ज्ज्योतिर्न्नारायणो विभुः ॥ नीराजयामि देवेशम्पञ्चदीपैः सुरेश्वर ॥ इति नीराजनम् ॥ अथ पुष्पाञ्जलिः ॥ हर विश्वाखिलाधार निराधार निराश्रय ॥ पुष्पाञ्जलिङ्गृहाणेश सोमेश्वर

नमोऽस्तु ते ॥ इति पुष्पाञ्जलिम् ॥ अथ प्रणाममन्त्रः ॥ हेतवे जगतामेव संसारार्णवसेतवे ॥ प्रभवे सर्व्वविद्यानां शम्भवे गुरवे नमः ॥ इति प्रणाममन्त्रः ॥ सर्व्वमन्त्रान्ते साङ्गाय सायुधाय सवाहनाय सपरिवाराय सावरणाय नम इति योज्यम् ॥

## अथ शिवसहस्रनामावली

अस्य श्रीसदाशिवसहस्रनामस्तोत्रमन्त्रस्य, नारायण ऋषिः, श्रीसदाशिवो देवता, अनुष्टुप्छन्दः, सदाशिवो बीजम्, गौरी शक्तिः, श्रीसदाशिवप्रीत्यर्थन्त द्रव्यसहस्रनामभिः अमुकद्रव्यसमर्प्पणे विनियोगः ॥ अथ ध्यानम् ॥ ध्यायेन्नित्यम्महेशं रजतगिरिनिभञ्चारुचन्द्रावतंसं रत्नाकल्पोज्ज्वलाङ्गम्परशुमृगवराभीतिहस्तम्प्रसन्नम् ॥ पद्मासीनं समन्तात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं विश्वाद्यं विश्ववन्द्यन्निखिलभयहरम्पञ्चवक्त्रन्त्रिनेत्रम् ॥ १ ॥ स्थिरायनमः ॥ १ ॥ स्थाणवेनमः ॥ २ ॥ प्रभवेनमः ॥ ३ ॥ भीमायनमः ॥ ४ ॥ प्रवरायनमः ॥ ५ ॥ वरदायनमः ॥ ६ ॥ वरायनमः ॥ ७ ॥ सर्व्वात्मनेनमः ॥ ८ ॥ सर्व्वविख्यातायनमः ॥ ९ ॥ सर्व्वस्मैनमः ॥ १० ॥ सर्व्वकरायनमः ॥ ११ ॥ भवायनमः ॥ १२ ॥ जटिनेनमः ॥१३॥ चर्म्मिणेनमः ॥ १४ ॥ शिखण्डिनेनमः ॥ १५ ॥ सर्व्वाङ्गायनमः ॥ १६ ॥ सर्व्वभावनायनमः ॥१७॥ हरायनमः ॥१८॥ हरिणाक्षायनमः ॥ १९ ॥ सर्व्वभूतहरायनमः ॥ २० ॥ प्रभवेनमः ॥ २१ ॥ प्रवृत्तयेनमः ॥ २२ ॥ निवृत्तायनमः ॥ २३ ॥ नियतायनमः ॥ २४ ॥ शाश्वतायनमः ॥ २५ ॥ ध्रुवायनमः ॥ २६ ॥ श्मशानवासिनेनमः ॥ २७ ॥ भगवतेनमः ॥ २८ ॥ खचरायनमः ॥ २९ ॥ गोचरायनमः ॥ ३० ॥ अर्द्दनायनमः ॥ ३१ ॥ अभिवाद्यायनमः ॥ ३२ ॥ महाकर्म्मणेनमः ॥३३॥

तपस्विनेनमः ॥ ३४ ॥ भूतभावनायनमः ॥ ३५ ॥ उन्मत्त-
वेषप्रच्छन्नायनमः ॥ ३६ ॥ सर्व्वलोकप्रजापतयेनमः ॥ ३७ ॥
महारूपायनमः ॥ ३८ ॥ महाकायायनमः ॥ ३९ ॥ वृषरूपाय-
नमः ॥ ४० ॥ महायशसेनमः ॥ ४१ ॥ महात्मनेनमः ॥४२॥
सर्व्वभूतात्मनेनमः ॥ ४३ ॥ विश्वरूपायनमः ॥ ४४ ॥ महा-
हनवेनमः ॥ ४५ ॥ लोकपालायनमः ॥ ४६ ॥ अन्तर्हितात्मने-
नमः ॥ ४७ ॥ प्रसादायनमः ॥४८॥ हयगर्द्दभयेनमः ॥४९॥
पवित्रायनमः ॥५०॥ महतेनमः ॥५१॥ नियमायनमः ॥५२॥
नियमाश्रितायनमः ॥ ५३ ॥ सर्व्वकर्म्मणेनमः ॥ ५४ ॥ स्वय-
म्भूतायनमः ॥ ५५ ॥ आदयेनमः ॥ ५६ ॥ आदिकरायनमः
॥ ५७ ॥ निधयेनमः ॥ ५८ ॥ सहस्राक्षायनमः ॥ ५९ ॥
विशालाक्षायनमः ॥ ६० ॥ सोमायनमः ॥ ६१ ॥ नक्षत्रसाध-
कायनमः ॥ ६२ ॥ चन्द्रायनमः ॥ ६३ ॥ सूर्य्यायनमः ॥६४॥
शनयेनमः ॥ ६५ ॥ केतवेनमः ॥ ६६ ॥ ग्रहायनमः ॥६७॥
ग्रहपतयेनमः ॥ ६८ ॥ वरायनमः ॥ ६९ ॥ अत्रयेनमः ॥७०॥
अत्र्यानमस्कर्त्रेनमः ॥ ७१ ॥ मृगवाणार्प्पणायनमः ॥ ७२ ॥
अनघायनमः ॥ ७३ ॥ महातपसेनमः ॥ ७४ ॥ घोरतपसेनमः
॥ ७५ ॥ अदीनायनमः ॥ ७६ ॥ दीनसाधकायनमः ॥७७॥
संव्वत्सरकरायनमः ॥ ७८ ॥ मन्त्रायनमः ॥ ७९ ॥ प्रमाणाय-
नमः ॥ ८० ॥ परमन्तपायनमः ॥ ८१ ॥ योगिनेनमः ॥८२॥
योज्यायनमः ॥ ८३ ॥ महाबीजायनमः ॥ ८४ ॥ महारेतसेनमः
॥ ८५ ॥ महाबलायनमः ॥ ८६ ॥ सुवर्णरेतसेनमः ॥ ८७ ॥
सर्व्वज्ञायनमः ॥ ८८ ॥ सुबीजायनमः ॥ ८९ ॥ बीजवाहनाय-
नमः ॥ ९० ॥ दशबाहवेनमः ॥९१॥ अनिमिषायनमः ॥९२॥
नीलकण्ठायनमः ॥ ९३ ॥ उमापतयेनमः ॥९४॥ विश्वरूपाय-

नमः ॥ ९५ ॥ स्वयंश्रेष्ठायनमः ॥ ९६ ॥ बलवीरायनमः ॥ ९७ ॥ अवलगणायनमः ॥ ९८ ॥ गणकर्त्रेनमः ॥ ९९ ॥ गणपतयेनमः ॥ १०० ॥ दिग्वाससेनमः ॥१०१॥ कामायनमः ॥ १०२ ॥ मन्त्रविदेनमः ॥१०३॥ परममन्त्रायनमः ॥१०४॥ सर्व्वभवकरायनमः ॥ १०५ ॥ हरायनमः ॥ १०६ ॥ कमण्डलुधरायनमः ॥ १०७ ॥ धन्विनेनमः ॥ १०८ ॥ बाणहस्तायनमः ॥ १०९ ॥ कपालवतेनमः ॥ ११० ॥ अशनिनेनमः ॥ १११ ॥ शतघ्निनेनम ॥ ११२ ॥ खड्गिनेनमः ॥ ११३ ॥ पट्टिशिनेनमः ॥ ११४ ॥ आयुधिनेनमः ॥ ११५ ॥ महतेनमः ॥ ११६ ॥ स्रुवहस्तायनमः ॥ ११७ ॥ सुरूपायनमः ॥११८॥ तेजसेनमः ॥ ११९ ॥ तेजस्करनिधयेनमः ॥१२०॥ उष्णीषिणेनमः ॥१२१॥ सुवक्त्रायनमः ॥१२२॥ उदग्रायनमः ॥१२३॥ विनतायनमः ॥ १२४ ॥ दीर्घायनमः ॥ १२५ ॥ हरिकेशाय नमः ॥ १२६ ॥ सुतीर्थायनमः ॥ १२७ ॥ कृष्णायनमः ॥ १२८ ॥ सृगालरूपायनमः ॥ १२९ ॥ सिद्धार्थायनमः ॥१३०॥ मुण्डायनमः ॥१३१॥ सर्व्वशुभंकरायनमः ॥१३२॥ अजायनमः ॥१३३॥ बहुरूपायनमः ॥१३४॥ गन्धधारिणेनमः ॥ १३५ ॥ कपर्द्दिनेनमः ॥१३६॥ ऊर्द्ध्वरेतसेनमः ॥१३७॥ ऊर्द्ध्वलिङ्गायनमः ॥ १३८ ॥ ऊर्द्ध्वशायिनेनमः ॥ १३९ ॥ नभस्थलायनमः ॥ १४० ॥ त्रिजटायनमः ॥१४१॥ चीरवाससे नमः ॥१४२॥ रुद्रायनम ॥१४३॥ सेनापतयेनमः ॥१४४॥ विभवेनमः ॥१४५॥ अहश्चरायनम ॥१४६॥ नक्तञ्चरायनमः ॥१४७॥ तिग्ममन्यवेनम ॥१४८॥ सुवर्च्चसायनमः ॥१४९॥ गजघ्नेनमः ॥ १५० ॥ दैत्यघ्नेनमः ॥ १५१ ॥ कालायनमः ॥१५२॥ लोकधात्रेनमः ॥ १५३ ॥ गुणाकरायनमः ॥१५४॥

सिंहशार्द्दूलरूपायनमः ॥ १५५ ॥ आर्द्र्चर्म्माम्बरावृतायनमः ॥१५६॥ कालयोगिनेनमः ॥१५७॥ महानादायनमः ॥१५८॥ सर्व्वकामायनमः ॥ १५९ ॥ चतुष्पथायनमः ॥१६०॥ निशाचरायनमः ॥१६१॥ प्रेतचारिणेनमः ॥१६२॥ भूतचारिणेनमः ॥१६३॥ महेश्वरायनमः ॥ १६४ ॥ बहुभूतायनमः ॥१६५॥ बहुधरायनमः ॥१६६॥ स्वर्भानवेनमः ॥१६७॥ अमितायनमः ॥१६८॥ गतयेनमः ॥ १६९ ॥ नृत्यप्रियायनमः ॥ १७० ॥ नित्यनर्त्तायनमः ॥ १७१ ॥ नर्त्तकायनमः ॥१७२॥ सर्व्वलालसायनमः ॥ १७३ ॥ घोरायनमः ॥ १७४ ॥ महातपसेनमः ॥ १७५ ॥ पाशायनमः ॥ १७६ ॥ नित्यायनमः ॥ १७७ ॥ गिरिरुहायनमः ॥ १७८ ॥ नभसेनमः ॥१७९॥ सहस्रहस्तायनमः । १८०॥ विजयायनमः ॥१८१॥ व्यवसायनमः ॥१८२॥ अतन्द्रितायनमः ॥१८३॥ अधर्षणायनमः ॥१८४॥ धर्षणात्मनेनमः ॥ १८५ ॥ यज्ञघ्नेनमः ॥१८६॥ कामनाशकायनमः ॥ १८७ ॥ दक्षयागापहारिणेनमः ॥ १८८ ॥ सुसहायनमः ॥१८९॥ मध्यमायनमः ॥१९०॥ तेजोपहारिणेनमः ॥१९१॥ बलघ्नेनमः ॥ १९२ ॥ मुदितायनमः ॥ १९३ ॥ अर्थायनमः ॥ १९४ ॥ अजितायनमः ॥ १९५ ॥ अवरायनमः ॥ १९६ ॥ गम्भीरायनमः ॥ १९७ ॥ गभीरायनमः ॥ १९८ ॥ गम्भीरबलवाहनायनमः ॥ १९९ ॥ न्यग्रोधरूपायनमः ॥२००॥ न्यग्रोधायनमः ॥ २०१ ॥ वृक्षकर्णस्थितयेनमः ॥ २०२॥ विभवेनमः ॥ २०३ ॥ सुतीक्ष्णदशनायनमः ॥ २०४ ॥ महाकायायनमः ॥२०५॥ महाननायनमः ॥२०६॥ विष्वक्सेनायनमः ॥२०७॥ हरयेनमः ॥२०८॥ यज्ञायनमः ॥२०९॥ संयुगापीडवाहनायनमः ॥ २१० ॥ तीक्ष्णतापायनमः ॥ २११ ॥ हर्य्यश्वायनमः

॥२१२॥ सहायायनमः ॥२१३॥ कर्म्मकालविदेनमः ॥२१४॥ विष्णुप्रसादितायनमः ॥२१५॥ यज्ञायनमः ॥२१६॥ समुद्रायनमः ॥२१७॥ वडवामुखायनमः ॥२१८॥ हुताशनसहायायनमः ॥ २१९ ॥ प्रशान्तात्मनेनमः ॥ २२० ॥ हुताशनायनमः ॥२२१॥ उग्रतेजसेनमः ॥ २२२ ॥ महातेजसेनमः ॥ २२३ ॥ जन्यायनमः ॥२२४॥ विजयकालविदेनमः ॥२२५॥ ज्योतिषामयनायनमः ॥२२६॥ सिद्धयेनमः ॥२२७॥ सर्व्वविग्रहायनमः ॥ २२८ ॥ शिखिनेनमः ॥ २२९ ॥ मुण्डिनेनमः ॥ २३० ॥ जटिनेनमः ॥ २३१ ॥ ज्वालिनेनमः ॥ २३२ ॥ मूर्तिजायनमः ॥२३३॥ मूर्द्ध्वगायनमः ॥ २३४ ॥ बलिनेनमः ॥ २३५ ॥ वेणविनेनमः ॥ २३६ ॥ पणविनेनमः ॥ २३७ ॥ तालिनेनमः ॥२३८॥ खलिनेनमः ॥२३९॥ कालकटङ्कटायनमः ॥२४०॥ नक्षत्रनिग्रहमतयेनमः ॥ २४१ ॥ गुणबुद्धयेनमः ॥ २४२ ॥ लयायनमः ॥ २४३ ॥ आगमायनमः ॥ २४४ ॥ प्रजापतयेनमः ॥ २४५ ॥ विश्वबाहवेनमः ॥२४६॥ विभागायनमः ॥२४७॥ सर्व्वगायनमः ॥ २४८ ॥ अमुखायनमः ॥२४९॥ विमोचनायनमः ॥ २५० ॥ सुसरणायनमः ॥ २५१ ॥ हिरण्यकवचोद्भवायनमः ॥ २५२ ॥ मेढ्रजायनमः ॥ २५३ ॥ बलचारिणेनमः ॥ २५४ ॥ महीचारिणेनमः ॥ २५५ ॥ स्रुतायनमः ॥ २५६ ॥ सर्व्वतूर्य्यनिनादिनेनमः ॥ २५७ ॥ सर्व्वतोद्यपरिग्रहायनमः ॥२५८॥ व्यालरूपायनमः ॥२५९॥ गुहावासिनेनमः ॥२६०॥ गुहायनमः ॥ २६१ ॥ मालिनेनमः ॥ २६२ ॥ तरङ्गविदेनमः ॥ २६३ ॥ त्रिदशायनमः ॥ २६४ ॥ त्रिकालधृषेनमः ॥२६५॥ कर्म्मसर्व्वबन्धविमोचनायनमः ॥२६६॥ असुरेन्द्राणाम्बन्धनायनमः ॥ २६७ ॥ युधिशत्रुविनाशनायनमः ॥ २६८ ॥ साङ्ख्य-

प्रसादायनमः ॥ २६६ ॥ दुर्व्वाससेनमः ॥ २७० ॥ सर्व्व-साधुनिषेवितायनमः ॥ २७१ ॥ प्रस्कन्दनायनमः ॥ २७२ ॥ विभागज्ञायनमः ॥ २७३ ॥ अतुल्यायनमः ॥२७४॥ यज्ञभाग-विदेनमः ॥ २७५ ॥ सर्व्ववासायनमः ॥ २७६ ॥ सर्व्वचारिणे-नमः ॥ २७७ ॥ दुर्व्वाससेनमः ॥ २७८ ॥ वासवायनमः ॥ २७६ ॥ अमरायनमः ॥ २८० ॥ हैमायनमः ॥ २८१ ॥ हेमकरायनमः ॥ २८२ ॥ अयज्ञायनमः ॥ २८३ ॥ सर्व्व-धारिणेनमः ॥ २८४ ॥ धरोत्तमायनमः ॥ २८५ ॥ लोहिता-क्षायनमः ॥ २८६ ॥ महाक्षायनमः ॥ २८७ ॥ विजयाक्षाय-नमः ॥ २८८ ॥ विशारदायनमः ॥ २८९ ॥ सङ्ग्रहायनमः ॥ २९० ॥ निग्रहायनमः ॥ २९१ ॥ कर्त्रेनमः ॥ २९२ ॥ सर्पचीरनिवासनायनमः ॥ २९३ ॥ मुख्यायनमः ॥ २९४ ॥ अमुख्यायनमः ॥ २९५ ॥ देहायनमः ॥ २९६ ॥ काहलयेनमः ॥ २९७ ॥ सर्व्वकामदायनमः ॥ २९८ ॥ सर्व्वकालप्रसादाय-नमः ॥ २९९ ॥ सुवलायनमः ॥ ३०० ॥ बलरूपधृषेनमः ॥ ३०१ ॥ सर्वकामवरायनमः ॥३०२॥ सर्व्वदायनमः ॥३०३॥ सर्व्वतोमुखायनमः ॥३०४॥ आकाशनिर्व्विरूपायनमः ॥३०५॥ निपातिनेनमः ॥ ३०६ ॥ अवशायनमः ॥ ३०७ ॥ खगाय-नमः ॥ ३०८ ॥ रौद्ररूपायनमः ॥३०६॥ अंशवेनमः ॥३१०॥ आदित्यायनमः ॥ ३११ ॥ बहुरश्मयेनमः ॥ ३१२ ॥ सुवर्च्च-स्विनेनमः ॥ ३१३ ॥ वसुवेगायनमः ॥ ३१४ ॥ महावेगाय-नमः ॥ ३१५ ॥ मनोवेगायनमः ॥ ३१६ ॥ निशाचरायनमः ॥ ३१७ ॥ सर्व्ववासिनेनमः ॥ ३१८ ॥ श्रियावासिनेनमः ॥ ३१६ ॥ उपदेशकरायनमः ॥३२०॥ अकारायनमः ॥३२१॥ मुनयेनमः ॥ ३२२ ॥ आत्मनिरालोकायनमः ॥३२३॥ सम्भ-

ग्नायनमः ॥ ३२४ ॥ सहस्रदायनमः ॥ ३२५ ॥ पक्षिणेनमः ॥ ३२६ ॥ पक्षरूपायनमः ॥३२७॥ अतिदीप्तायनमः ॥३२८॥ निशाम्पतयेनमः ॥ ३२९ ॥ उन्मादायनमः ॥३३०॥ मदनायनमः ॥ ३३१ ॥ कामायनमः ॥ ३३२ ॥ अश्वत्थायनमः ॥ ३३३ ॥ अर्त्थकरायनमः ॥ ३३४ ॥ यशसेनमः ॥३३५॥ वामदेवायनमः ॥ ३३६ ॥ वामायनमः ॥ ३३७ ॥ प्राचेनमः ॥ ३३८ ॥ दक्षिणायनमः ॥ ३३९ ॥ वामनायनमः ॥ ३४० ॥ सिद्धयोगिनेनमः ॥३४१॥ महर्ष्षयेनमः ॥३४२॥ सिद्धार्थायनमः ॥ ३४३ ॥ सिद्धसाधकायनमः ॥ ३४४ ॥ भिक्षवेनमः ॥ ३४५ ॥ भिक्षुरूपायनमः ॥ ३४६ ॥ विपणायनमः ॥३४७॥ मृदवेनमः ॥ ३४८ ॥ अव्ययायनमः ॥३४९॥ महासेनायनमः ॥ ३५० ॥ विशाखायनमः ॥३५१॥ षष्टिभागायनमः ॥३५२॥ गवाम्पतयेनमः ॥३५३॥ वज्रहस्तायनमः ॥३५४॥ विष्कम्भिनेनमः ॥ ३५५ ॥ चमूस्तम्भनायनमः ॥३५६॥ वृत्तावृत्तकरायनमः ॥३५७॥ तालायनमः ॥ ३५८ ॥ मधवेनमः ॥ ३५९ ॥ मधुकलोचनायनमः ॥ ३६० ॥ वाचस्पत्यायनमः ॥ ३६१ ॥ वाजसनायनमः ॥ ३६२ ॥ आश्रमपूजितायनमः ॥ ३६३ ॥ ब्रह्मचारिणेनमः ॥ ३६४ ॥ लोकचारिणेनमः ॥ ३६५ ॥ सर्व्वचारिणेनमः ॥ ३६६ ॥ विचारविदेनमः ॥ ३६७ ॥ ईशानायनमः ॥ ३६८ ॥ ईश्वरायनमः ॥३६९॥ कालायनमः ॥३७०॥ निशाचारिणेनमः ॥ ३७१ ॥ पिनाकधृषेनमः ॥३७२॥ निमित्तस्थायनमः ॥ ३७३ ॥ निमित्तायनमः ॥ ३७४ ॥ नन्द्येनमः ॥ ३७५ ॥ नन्दिकरायनमः ॥ ३७६ ॥ हरयेनमः ॥ ३७७ ॥ नन्दीश्वरायनमः ॥ ३७८ ॥ नन्दिनेनमः ॥ ३७९ ॥ नन्दनायनमः ॥ ३८० ॥ नन्दिवर्द्धनायनमः ॥ ३८१ ॥ भगहारिणेनमः

॥ ३८२ ॥ निहन्त्रेनमः ॥ ३८३ ॥ कालायनमः ॥ ३८४ ॥ ब्रह्मणेनमः ॥ ३८५ ॥ पितामहायनमः ॥ ३८६ ॥ चतुर्म्मुखायनमः ॥ ३८७ ॥ महालिङ्गायनमः ॥ ३८८ ॥ चारुलिङ्गायनमः ॥ ३८६ ॥ लिङ्गाध्यक्षायनमः ॥ ३९० ॥ सुराध्यक्षायनमः ॥३९१॥ योगाध्यक्षायनमः ॥३९२॥ युगावहायनमः ॥३९३॥ बीजाध्यक्षायनमः ॥३९४॥ बीजकर्त्त्रेनमः ॥३९५॥ अध्यात्मानुगतायनमः ॥ ३९६ ॥ बलायनमः ॥ ३९७ ॥ इतिहासायनमः ॥ ३९८ ॥ सङ्कल्पायनमः ॥ ३९९ ॥ गौतमायनमः ॥४००॥ *निशाकरायनमः ॥ ४०१ ॥ दम्भायनमः ॥ ४०२ ॥ अदम्भाय*नमः ॥ ४०३ ॥ वैदम्भायनमः ॥४०४॥ वश्यायनमः ॥४०५॥ वशकरायनमः ॥ ४०६ ॥ कलयेनमः ॥ ४०७ ॥ लोककर्त्त्रेनमः ॥ ४०८ ॥ पशुपतयेनमः ॥ ४०९ ॥ महाकर्त्त्रेनमः ॥ ४१० ॥ अनौषधायनमः ॥ ४११ ॥ अक्षरायनमः ॥४१२॥ परमब्रह्मणेनमः ॥ ४१३ ॥ बलवतेनमः ॥ ४१४ ॥ शक्रायनमः ॥४१५॥ नीतयेनमः ॥ ४१६ ॥ अनीतयेनमः ॥ ४१७ ॥ शुद्धात्मनेनमः ॥ ४१८ ॥ शुद्धायनमः ॥ ४१६ ॥ मान्यायनमः ॥ ४२० ॥ गतागतायनमः ॥४२१॥ बहुप्रसादायनमः ॥४२२॥ सुस्वप्नायनमः॥४२३॥ दर्प्पणायनमः ॥४२४॥ अमित्रजितेनमः ॥४२५॥ वेदकारायनमः ॥४२६॥ मन्त्रकारायनमः ॥ ४२७ ॥ विदुषेनमः ॥ ४२८ ॥ समरमर्द्दनायनमः ॥४२६॥ महामेघनिवासिनेनमः ॥ ४३० ॥ महाघोरायनमः ॥ ४३१ ॥ वशिनेनमः ॥ ४३२ ॥ करायनमः ॥ ४३३ ॥ अग्निज्वालायनमः ॥ ४३४ ॥ महाज्वालायनमः ॥४३५॥ अतिधूम्रायनमः ॥ ४३६ ॥ हुतायनमः ॥ ४३७ ॥ हविषेनमः ॥ ४३८ ॥ वृषणायनमः ॥ ४३६ ॥ शङ्करायनमः ॥ ४४० ॥ वर्च्चस्विनेनमः ॥४४१॥ धूमकेतनाय-

नमः ॥ ४४२ ॥ नीलायनमः ॥ ४४३ ॥ अङ्गलुब्धायनमः ॥ ४४४ ॥ शोभनायनमः ॥४४५॥ निरवग्रहायनमः ॥४४६॥ स्वस्तिदायनमः ॥ ४४७ ॥ स्वातिमावायनमः ॥ ४४८ ॥ मागिनेनमः ॥ ४४९ ॥ भागकरायनमः ॥ ४५० ॥ लघवेनमः ॥ ४५१ ॥ उत्साङ्गायनमः ॥ ४५२ ॥ महाङ्गायनमः ॥४५३॥ महागर्भपरायणायनमः ॥ ४५४ ॥ कृष्णवर्णायनमः ॥४५५॥ सुवर्णायनमः ॥ ४५६ ॥ सर्व्वदेहिनामिन्द्रियायनमः ॥४५७॥ महापादायनमः ॥ ४५८ ॥ महाहस्तायनमः ॥४५९॥ महाकायायनमः ॥४६० ॥ महायशसेनमः ॥४६१॥ महामूर्द्ध्नेनमः ॥ ४६२ ॥ महामात्रायनमः ॥४६३॥ महानेत्रायनमः ॥४६४॥ निशालयायनमः ॥ ४६५ ॥ महान्तकायनमः ॥ ४६६ ॥ महाकर्णायनमः ॥ ४६७ ॥ महोष्ठायनमः ॥४६८॥ महाहनवेनमः ॥४६९॥ महानासायनमः ॥४७०॥ महाकम्बवेनमः ॥४७१॥ महाग्रीवायनमः ॥ ४७२ ॥ श्मशानभाजेनमः ॥ ४७३ ॥ महावक्षसेनमः ॥ ४७४ ॥ महोरस्कायनमः ॥ ४७५ ॥ अन्तरात्मने नमः ॥ ४७६ ॥ मृगालयायनमः ॥ ४७७ ॥ लम्बनायनमः ॥४७८॥ लम्बितोष्ठायनमः ॥४७९॥ महामायायनमः ॥४८०॥ पयोनिधयेनमः ॥ ४८१ ॥ महादन्तायनमः ॥ ४८२ ॥ महादंष्ट्रायनमः ॥४८३॥ महाजिह्वायनमः ॥४८४॥ महामुखायनमः ॥४८५॥ महानखायनमः ॥ ४८६ ॥ महारोम्णेनमः ॥४८७॥ महाकेशायनमः ॥४८८॥ महाजटायनमः ॥४८९॥ प्रसन्नायनमः ॥४९०॥ प्रसादायनमः ॥ ४९१ ॥ प्रत्ययायनमः ॥ ४९२ ॥ गिरिसाधनायनमः ॥४९३॥ स्नेहनायनमः ॥ ४९४ ॥ अस्नेहनायनमः ॥ ४९५ ॥ अजितायनमः ॥ ४९६ ॥ महामुनयेनमः ॥४९७॥ वृक्षाकारायनमः ॥ ४९८ ॥ वृक्षकेतवेनमः ॥४९९॥

अनलायनमः ॥ ५०० ॥ वायुवाहनायनमः ॥५०१॥ गण्डलिनेनमः ॥ ५०२ ॥ मेरुधाम्नेनमः ॥ ५०३ ॥ देवाधिपतयेनमः ॥ ५०४ ॥ अथर्व्वशीर्ष्णायनमः ॥ ५०५ ॥ सामास्यायनमः ॥ ५०६ ॥ ऋक्सहस्रामितेक्षणायनमः ॥ ५०७ ॥ यजुःपादभुजायनमः ॥ ५०८ ॥ गुह्यायनमः ॥ ५०९ ॥ प्रकाशायनमः ॥५१०॥ जङ्गमायनमः ॥५११॥ अमोघार्थायनमः ॥५१२॥ प्रसादायनमः ॥ ५१३ ॥ अभिगम्यायनमः ॥ ५१४ ॥ सुदर्शनायनमः ॥ ५१५ ॥ उपकारायनमः ॥५१६॥ प्रियायनमः ॥५१७॥ सर्व्वायनमः ॥५१८॥ कनकायनमः ॥५१९॥ काञ्चनच्छवयेनमः ॥५२०॥ नाभयेनमः ॥५२१॥ नन्दिकारायनमः ॥ ५२२ ॥ भावायनमः ॥ ५२३ ॥ पुष्करस्थपतयेनमः ॥ ५२४ ॥ स्थिरायनमः ॥ ५२५ ॥ द्वादशायनमः ॥ ५२६ ॥ त्रासनायनमः ॥ ५२७ ॥ आद्यायनमः ॥ ५२८ ॥ यज्ञायनमः ॥ ५२९ ॥ यज्ञसमाहितायनमः ॥५३०॥ नक्तायनमः ॥५३१॥ कलयेनमः ॥ ५३२ ॥ कालायनमः ॥ ५३३ ॥ मकरायनमः ॥५३४॥ कालपूजितायनमः ॥५३५॥ सगणायनमः ॥५३६॥ गणकारायनमः ॥ ५३७ ॥ भूतवाहनसारथयेनमः ॥ ५३८ ॥ भस्मशयायनमः ॥ ५३९ ॥ भस्मगोप्त्रेनमः ॥ ५४० ॥ भस्मभूतायनमः ॥५४१॥ तरवेनमः ॥५४२॥ गणायनमः ॥५४३॥ लोकपालायनमः ॥ ५४४ ॥ अलोकायनमः ॥५४५॥ महात्मनेनमः ॥ ५४६ ॥ सर्व्वपूजितायनमः ॥ ५४७ ॥ शुक्लायनमः ॥ ५४८ ॥ त्रिशुक्लायनमः ॥ ५४९ ॥ सम्पन्नायनमः ॥५५०॥ शुचयेनमः ॥ ५५१ ॥ भूतनिषेवितायनमः ॥ ५५२ ॥ आश्रमस्थायनमः ॥ ५५३ ॥ क्रियावस्थायनमः ॥५५४॥ विश्वकर्म्ममतयेनमः ॥ ५५५ ॥ वरायनमः ॥ ५५६ ॥ विशालशाखाय-

नमः ॥ ५५७ ॥ ताम्रोष्ठायनमः ॥ ५५८ ॥ अम्बुजालायनमः ॥ ५५९ ॥ सुनिश्चलायनमः ॥५६०॥ कपिलायनमः ॥५६१॥ कपिशायनमः ॥ ५६२ ॥ शुक्लायनमः ॥ ५६३ ॥ आयुषेनमः ॥ ५६४ ॥ परायनमः ॥ ५६५ ॥ अपरायनमः ॥ ५६६ ॥ गन्धर्व्वायनमः ॥ ५६७ ॥ अदितयेनमः ॥ ५६८ ॥ तार्क्ष्याय-नमः ॥ ५६९ ॥ सुविज्ञेयायनमः ॥ ५७० ॥ सुशारदायनमः ॥ ५७१ ॥ परश्वधायुधायनमः ॥ ५७२ ॥ देवायनमः ॥५७३॥ अनुकारिणेनमः ॥ ५७४ ॥ सुवान्धवायनमः ॥ ५७५ ॥ तुम्ब-वीणायनमः ॥ ५७६ ॥ महाक्रोधायनमः ॥ ५७७ ॥ ऊर्द्ध्व-रेतसेनमः ॥ ५७८ ॥ जलेशायनमः ॥ ५७९ ॥ उग्रायनमः ॥ ५८० ॥ वंशकरायनमः ॥ ५८१ ॥ वंशायनमः ॥ ५८२ ॥ वंशनादायनमः ॥ ५८३ ॥ अनिन्दितायनमः ॥ ५८४ ॥ सर्व्वाङ्गरूपायनमः ॥ ५८५ ॥ मायाविनेनमः ॥५८६॥ सुहृदाय-नमः ॥५८७॥ अनिलायनमः ॥५८८॥ अनलायनमः ॥५८९॥ बन्धनायनमः ॥ ५९० ॥ बन्धकर्त्रेनमः ॥ ५९१ ॥ सुबन्धन-विमोचनायनमः ॥५९२॥ सयज्ञारयेनमः ॥५९३॥ सकामारये-नमः ॥ ५९४ ॥ महादंष्ट्रायनमः ॥ ५९५ ॥ महायुधायनमः ॥ ५९६ ॥ बहुधानिन्दितायनमः ॥ ५९७ ॥ शर्व्वायनमः ॥ ५९८ ॥ शङ्करायनमः ॥ ५९९ ॥ शङ्करायनमः ॥ ६०० ॥ अधनायनमः ॥ ६०१ ॥ अमरेशायनमः ॥६०२॥ महादेवाय-नमः ॥ ६०३ ॥ विश्वदेवायनमः ॥ ६०४ ॥ सुरारिघ्नेनमः ॥ ६०५ ॥ अहिर्बुध्न्यायनमः ॥ ६०६ ॥ अनिलाभायनमः ॥ ६०७ ॥ चेकितायनमः ॥ ६०८ ॥ हविषेनमः ॥ ६०९ ॥ अजैकपदेनमः ॥ ६१० ॥ कपालिनेनमः ॥ ६११ ॥ त्रिशङ्कवे-नमः ॥६१२॥ अजितायनमः ॥६१३॥ शिवायनमः ॥६१४॥

धन्वन्तरयेनमः ॥ ६१५ ॥ धूमकेतवेनमः ॥ ६१६ ॥ स्कन्दायनमः ॥ ६१७ ॥ वैश्रवणायनमः ॥६१८॥ धात्रेनमः ॥६१९॥ शक्रायनमः ॥ ६२० ॥ विष्णवेनमः ॥ ६२१ ॥ मित्रायनमः ॥ ६२२ ॥ त्वष्ट्रेनमः ॥ ६२३ ॥ ध्रुवायनमः ॥ ६२४ ॥ धरायनमः ॥ ६२५ ॥ प्रभावायनमः ॥ ६२६ ॥ सर्व्वगवेनमः ॥ ६२७ ॥ अर्य्यम्णेनमः ॥ ६२८ ॥ सवित्रेनमः ॥ ६२९ ॥ रवयेनमः ॥ ६३० ॥ उपङ्गवेनमः ॥ ६३१ ॥ विधात्रेनमः ॥ ६३२ ॥ मान्धात्रेनमः ॥६३३॥ भूतभावनायनमः ॥६३४॥ विभवेनमः ॥ ६३५ ॥ वर्णविभाविनेनमः ॥ ६३६ ॥ सर्व्वकामगुणावहायनमः ॥ ६३७ ॥ पद्मनाभायनमः ॥ ६३८ ॥ महागर्भायनमः ॥ ६३९ ॥ चन्द्रवक्त्रायनमः ॥ ६४० ॥ अनिलायनमः ॥ ६४१ ॥ अनलायनमः ॥ ६४२ ॥ बलवतेनमः ॥ ६४३ ॥ उपशान्तायनमः ॥६४४॥ पुराणायनमः ॥६४५॥ पुण्यचञ्चवेनमः ॥ ६४६ ॥ ईत्यैनमः ॥ ६४७ ॥ कुरुकर्त्त्रेनमः ॥ ६४८ ॥ कुरुवासिनेनमः ॥६४९॥ पुरुहूतायनमः ॥६५०॥ गुणौषधायनमः ॥ ६५१ ॥ सर्व्वाश्रयायनमः ॥ ६५२ ॥ दर्भचारिणेनमः ॥ ६५३ ॥ सर्व्वेषांप्राणिपतयेनमः ॥ ६५४ ॥ देवदेवायनमः ॥ ६५५ ॥ सुखासक्तायनमः ॥ ६५६ ॥ सतेनमः ॥ ६५७ ॥ असतेनमः ॥ ६५८ ॥ सर्व्वरत्नविदेनमः ॥६५९॥ कैलासगिरिवासिनेनमः॥६६०॥ हिमवद्गिरिसंश्रयायनमः॥६६१॥ कूलहारिणेनमः ॥ ६६२ ॥ कूलकर्त्त्रेनमः ॥ ६६३ ॥ बहुविद्यायनमः ॥ ६६४ ॥ बहुप्रदायनमः ॥६६५॥ वणिजायनमः ॥ ६६६ ॥ वर्द्धकिनेनमः ॥ ६६७ ॥ वृक्षायनमः ॥ ६६८ ॥ वकुलायनमः ॥ ६६९ ॥ चन्दनायनमः ॥ ६७० ॥ छन्दसेनमः ॥ ६७१ ॥ सारग्रीवायनमः ॥६७२॥ महाजत्रवेनमः ॥६७३॥

अलोलायनमः ॥ ६७४ ॥ महौषधायनमः ॥ ६७५ ॥ सिद्धार्थ-कारिणेनमः ॥ ६७६ ॥ छन्दोव्याकरणोत्तरसिद्धार्थायनमः ॥६७७॥ सिंहनादायनमः ॥६७८॥ सिंहदंष्ट्रायनमः ॥६७९॥ सिंहगायनमः ॥ ६८० ॥ सिंहवाहनायनमः ॥ ६८१ ॥ प्रभावात्मनेनमः ॥ ६८२ ॥ जगत्कालस्थालायनमः ॥ ६८३ ॥ लोकहितायनमः ॥ ६८४ ॥ तरवेनमः ॥ ६८५ ॥ सारङ्गायनमः ॥ ६८६ ॥ नवचक्राङ्गायनमः ॥ ६८७ ॥ केतुमालिनेनमः ॥ ६८८ ॥ सभावनायनमः ॥६८६॥ भूतालयायनमः ॥६९०॥ भूतपतयेनमः ॥६९१॥ अहोरात्रायनमः ॥६९२॥ अनिन्दितायनमः ॥ ६९३ ॥ सर्व्वभूतवाहित्रेनमः ॥ ६९४ ॥ सर्व्वभूतनिलयायनमः ॥ ६९५ ॥ विभवेनमः ॥ ६९६ ॥ भवायनमः ॥ ६६७ ॥ अमोघायनमः ॥ ६६८ ॥ सँय्यतायनमः ॥६६६॥ अश्वायनमः ॥७००॥ भोजनायनमः ॥७०१॥ प्राणधारणायनमः ॥७०२॥ धृतिमतेनमः ॥७०३॥ मतिमतेनमः ॥७०४॥ दक्षायनमः ॥७०५॥ सत्कृतायनमः ॥७०६॥ युगाधिपायनमः ॥७०७॥ गोपालायनमः ॥७०८॥ गोपतयेनमः ॥७०९॥ ग्रामायनमः ॥७१०॥ गोचर्म्मवसनायनमः ॥७११॥ हरयेनमः ॥७१२॥ हिरण्यबाहवेनमः ॥ ७१३ ॥ प्रवेशिनाङ्गुहापालायनमः ॥७१४॥ प्रकृष्टारयेनमः ॥७१५॥ महाहर्षायनमः ॥७१६॥ जितकामायनमः ॥ ७१७ ॥ जितेन्द्रियायनमः ॥ ७१८ ॥ गान्धारायनमः ॥ ७१६ ॥ सुवासायनमः ॥७२०॥ तपःसक्तायनमः ॥७२१॥ रतयेनमः ॥ ७२२ ॥ नरायनमः ॥ ७२३ ॥ महागीतायनमः ॥ ७२४ ॥ महानृत्यायनमः ॥ ७२५ ॥ अप्सरोगणसेवितायनमः ॥ ७२६ ॥ महाकेतवेनमः ॥ ७२७ ॥ महाधातवेनमः ॥७२८॥ नैकसानुचरायनमः ॥७२६॥ चलायनमः ॥७३०॥ आवेदनीयाय-

नमः ॥७३१॥ आदेशायनमः ॥७३२॥ सर्व्वगन्धसुखावहायनमः ॥७३३॥ तोरणायनमः ॥७३४॥ तारणायनमः ॥७३५॥ वातायनमः ॥७३६॥ परिधयेनमः ॥७३७॥ पतिखेचरायनमः ॥७३८॥ सँय्योगवर्द्धनायनमः ॥ ७३९ ॥ गुणाधिकवृद्धायनमः ॥७४०॥ अतिवृद्धायनमः ॥७४१॥ गुणाधिकायनमः ॥७४२॥ नित्यात्मसहायायनमः ॥ ७४३ ॥ देवासुरपतयेनमः ॥७४४॥ पत्येनमः ॥ ७४५ ॥ युक्तायनमः ॥ ७४६ ॥ युक्तबाहवेनमः ॥७४७॥ दिविसुपर्व्वदेवायनमः ॥ ७४८ ॥ आपाढायनमः ॥ ७४९ ॥ सुपाढायनमः ॥ ७५० ॥ ध्रुवायनमः ॥ ७५१ ॥ हरणायनमः ॥ ७५२ ॥ हरायनमः ॥७५३॥ आवर्त्तमानवपुषेनमः ॥७५४॥ वसुश्रेष्ठायनमः ॥ ७५५ ॥ महापथायनमः ॥ ७५६ ॥ विमर्प्पशिरोहारिणेनमः ॥ ७५७ ॥ सर्व्वलक्षणलक्षितायनमः ॥७५८॥ अक्षरथयोगिनेनमः ॥ ७५९ ॥ सर्व्वयोगिनेनमः ॥ ७६० ॥ महाबलायनमः ॥ ७६१ ॥ समाम्नायायनमः ॥ ७६२ ॥ असमाम्नायायनमः ॥ ७६३ ॥ तीर्त्थदेवायनमः ॥७६४॥ महारथायनमः ॥ ७६५ ॥ निर्ज्जीवायनमः ॥ ७६६ ॥ जीवनायनमः ॥ ७६७ ॥ मन्त्रायनमः ॥ ७६८ ॥ शुभाक्षायनमः ॥ ७६९ ॥ बहुकर्कशायनमः ॥७७०॥ रत्नप्रभूतायनमः ॥७७१॥ रत्नाङ्गायनमः ॥ ७७२ ॥ महार्णवनिपानविदेनमः ॥ ७७३ ॥ मूलायनमः ॥ ७७४ ॥ विशालायनमः ॥ ७७५ ॥ अमृतायनमः ॥ ७७६ ॥ व्यक्ताव्यक्तायनमः ॥ ७७७ ॥ तपोनिधयेनमः ॥७७८॥ आरोहणायनमः ॥७७९॥ अधिरोधायनमः ॥७८०॥ शूलधारिणेनमः ॥ ७८१ ॥ महायशसेनमः ॥ ७८२ ॥ सेनाकल्पायनमः ॥ ७८३ ॥ महाकल्पायनमः ॥ ७८४ ॥ योगायनमः ॥ ७८५ ॥ युगकरायनमः ॥७८६॥ हरयेनमः ॥७८७॥

युगरूपायनमः ॥ ७८८ ॥ महारूपायनमः ॥ ७८९ ॥ महानागहनायनमः ॥ ७९० ॥ वधायनमः ॥ ७९१ ॥ न्यायनिर्व्वपणायनमः ॥ ७९२ ॥ पादायनमः ॥ ७९३ ॥ पण्डितायनमः ॥ ७९४ ॥ अचलोपमायनमः ॥ ७९५ ॥ बहुमालायनमः ॥ ७९६ ॥ महामालायनमः ॥ ७९७ ॥ शशिहरसुलोचनायनमः ॥ ७९८ ॥ विस्तारलवणकूपायनमः ॥ ७९९ ॥ त्रियुगायनमः ॥ ८०० ॥ सफलोदनायनमः ॥८०१॥ त्रिनेत्रायनमः ॥८०२॥ विषण्णाङ्गायनमः ॥ ८०३ ॥ मणिविद्धायनमः ॥ ८०४ ॥ जटाधरायनमः ॥८०५॥ विन्दवेनमः ॥८०६॥ विसर्गायनमः ॥८०७॥ सुमुखायनमः ॥८०८॥ शरायनमः ॥८०९॥ सर्व्वायुधायनमः ॥ ८१० ॥ सहायनमः ॥ ८११ ॥ निवेदनायनमः ॥८१२॥ सुखाजातायनमः ॥८१३॥ सुगन्धारायनमः ॥८१४॥ महाधनुषेनमः ॥८१५॥ गन्धपालिभगवतेनमः ॥८१६॥ सर्व्वकर्म्मोत्थानायनमः ॥८१७॥ मन्थानबहुलवायवेनमः ॥८१८॥ सकलायनमः ॥ ८१९ ॥ सर्व्वलोचनायनमः ॥ ८२० ॥ तलस्तालायनमः ॥ ८२१ ॥ करस्थालिनेनमः ॥ ८२२ ॥ ऊर्द्ध्वसंहननायनमः ॥ ८२३ ॥ महतेनमः ॥ ८२४ ॥ छत्रायनमः ॥ ८२५ ॥ सुच्छत्रायनमः ॥ ८२६ ॥ विख्याततलोकायनमः ॥८२७॥ सर्व्वाश्रयक्रमायनमः ॥८२८॥ मुण्डायनमः ॥८२९॥ विरूपायनमः ॥ ८३० ॥ विकृतायनमः ॥ ८३१ ॥ दण्डिनेनमः ॥ ८३२ ॥ कुण्डिनेनमः ॥ ८३३ ॥ विकुर्व्वाणायनमः ॥८३४॥ हर्य्यक्षायनमः ॥ ८३५ ॥ ककुभायनमः ॥ ८३६ ॥ वज्रिणेनमः ॥८३७॥ शतजिह्वायनमः ॥८३८॥ सहस्रपत्सहस्रमूर्द्ध्नेनमः ॥ ८३९ ॥ देवेन्द्रायनमः ॥ ८४० ॥ सर्व्वदेवमयायनमः ॥ ८४१ ॥ गुरवेनमः ॥ ८४२ ॥ सहस्रबाहवेनमः ॥ ८४३ ॥

सर्व्वाङ्गायनमः ॥ ८४४ ॥ शरण्यायनमः॥ ८४५ ॥ सर्व्वलोककृतेनमः ॥ ८४६ ॥ पवित्रायनमः ॥८४७॥ त्रिककुन्मन्त्रायनमः ॥८४८॥ कनिष्ठायनमः ॥८४९॥ कृष्णपिङ्गलायनमः ॥८५०॥ ब्रह्मदण्डविनिर्म्मात्रेनमः ॥ ८५१ ॥ शतघ्नीपाशशक्तिमतेनमः ॥८५२॥ पद्मगर्भायनमः ॥८५३॥ महागर्भायनमः ॥८५४॥ ब्रह्मगर्भायनमः ॥ ८५५ ॥ जलोद्भवायनमः ॥ ८५६ ॥ गभस्तयेनमः ॥ ८५७ ॥ ब्रह्मकृतेनमः ॥ ८५८ ॥ ब्रह्मिणेनमः ॥८५९॥ ब्रह्मविदेनमः ॥ ८६० ॥ ब्राह्मणायनमः ॥ ८६१ ॥ गतयेनमः ॥ ८६२ ॥ अनन्तरूपायनमः ॥ ८६३ ॥ नैकात्मनेनमः ॥ ८६४ ॥ स्वयम्भुवस्तिग्मतेजसेनमः ॥ ८६५ ॥ उद्ध्र्वगात्मनेनमः ॥ ८६६ ॥ पशुपतयेनमः ॥ ८६७ ॥ वातरंहसेनमः ॥ ८६८ ॥ मनोजवायनमः ॥८६९॥ चन्दनिनेनमः ॥८७०॥ पद्मनालाग्रायनमः ॥ ८७१ ॥ सुरभ्युत्तारणायनमः ॥ ८७२ ॥ नरायनमः ॥ ८७३ ॥ कर्णिकारमहास्रग्विणेनमः ॥ ८७४ ॥ नीलमौलयेनमः ॥ ८७५ ॥ पिनाकधृतेनमः ॥ ८७६ ॥ उमापतयेनमः ॥ ८७७ ॥ उमाकान्तायनमः ॥ ८७८ ॥ जाह्नवीधृतेनमः ॥ ८७९ ॥ उमाधवायनमः ॥८८०॥ वरवराहायनमः ॥ ८८१ ॥ वरदायनमः ॥ ८८२ ॥ वरेण्यायनमः ॥ ८८३ ॥ सुमहास्वनायनमः ॥ ८८४ ॥ महाप्रसादायनमः ॥ ८८५ ॥ दमनायनमः ॥ ८८६ ॥ शत्रुघ्नेनमः ॥ ८८७ ॥ श्वेतपिङ्गलायनमः ॥ ८८८ ॥ पीतात्मनेनमः ॥ ८८९ ॥ परमात्मनेनमः ॥ ८९० ॥ प्रयतात्मनेनमः ॥८९१॥ प्रधानधृतेनमः ॥८९२॥ सर्व्वपार्श्वमुखायनमः ॥ ८९३ ॥ त्र्यक्षाय नमः ॥ ८९४ ॥ धर्म्मसाधारणवरायनमः ॥ ८९५ ॥ चराचरात्मनेनमः ॥८९६॥ सूक्ष्मात्मनेनमः ॥ ८९७ ॥ अमृतगोवृषेश्वरायनमः ॥ ८९८ ॥

साध्यर्ष्ययेनमः ॥ ८९९ ॥ आदित्यत्रासवेनमः ॥ ९०० ॥ विनिम्वत्सविश्रमृत्तायनमः ॥ ९०१ ॥ व्यासायनमः ॥ ९०२ ॥ मर्गसुसङ्क्षेपविस्तरायनमः ॥९०३॥ पर्य्ययनरायनमः ॥९०४॥ ऋतवेनमः ॥ ९०५ ॥ संव्वत्सरायनमः ॥ ९०६ ॥ मासायनमः ॥९०७॥ पक्षायनमः ॥९०८॥ सङ्ख्यासमापनायनमः ॥९०९॥ कलायैनमः ॥९१० ॥ काष्ठायैनमः ॥ ९११ ॥ लवेभ्योनमः ॥ ९१२ ॥ मात्राभ्योनमः ॥ ९१३ ॥ मुहूर्त्ताहःक्षपाभ्योनमः ॥ ९१४ ॥ क्षणेभ्योनमः ॥ ९१५ ॥ विश्वक्षेत्रायनमः ॥९१६॥ प्रजाबीजायनमः ॥ ९१७ ॥ लिङ्गायनमः ॥९१८॥ आद्यनिर्ग्गमायनमः ॥ ९१९ ॥ सतेनमः ॥ ९२० ॥ असतेनमः ॥९२१॥ व्यक्तायनमः ॥ ९२२ ॥ अव्यक्तायनमः ॥ ९२३ ॥ पित्रेनमः ॥ ९२४ ॥ मात्रेनमः ॥ ९२५ ॥ पितामहायनमः ॥९२६॥ स्वर्गद्वारायनमः ॥ ९२७ ॥ प्रजाद्वारायनमः ॥ ९२८ ॥ मोक्षद्वारायनमः ॥ ९२९ ॥ त्रिविष्टपायनमः ॥ ९३० ॥ निर्व्वाणायनमः ॥ ९३१ ॥ ह्लादनायनमः ॥ ९३२ ॥ ब्रह्मलोकायनमः ॥ ९३३ ॥ परागतयेनमः ॥ ९३४ ॥ देवासुरविनिर्म्मात्रेनमः ॥ ९३५ ॥ देवासुरपरायणायनमः ॥ ९३६ ॥ देवासुरगुरवेनमः ॥ ९३७ ॥ देवायनमः ॥ ९३८ ॥ देवासुरनमस्कृतायनमः ॥ ९३९ ॥ देवासुरमहामात्रायनमः ॥९४०॥ देवासुरगणाश्रयायनमः ॥ ९४१ ॥ देवासुरगणाध्यक्षायनमः ॥ ९४२ ॥ देवासुरगणाग्रण्येनमः ॥९४३॥ देवातिदेवायनमः ॥९४४॥ देवर्ष्ययेनमः ॥ ९४५ ॥ देवासुरवरप्रदायनमः ॥९४६॥ देवासुरेश्वरायनमः ॥ ९४७ ॥ विश्वायनमः ॥ ९४८ ॥ देवासुरमहेश्वरायनमः ॥ ९४९ ॥ सर्व्वदेवमयायनमः ॥ ९५० ॥ अचिन्त्यायनमः ॥ ९५१ ॥ देवात्मनेनमः ॥ ९५२ ॥ आत्मसम्भवायनमः

॥ ९५३ ॥ उद्भिदेनमः ॥ ९५४ ॥ त्रिविक्रमायनमः ॥९५५॥ वैद्यायनमः ॥ ९५६ ॥ विरजायनमः ॥ ९५७ ॥ नीरजायनमः ॥ ९५८ ॥ अमरायनमः ॥ ९५९ ॥ ईड्यायनमः ॥ ९६० ॥ हस्तीश्वरायनमः ॥ ९६१ ॥ व्याघ्रायनमः ॥ ९६२ ॥ देवसिंहायनमः ॥ ९६३ ॥ नरर्षभायनमः ॥ ९६४ ॥ विबुधायनमः ॥९६५॥ अग्रवरायनमः ॥९६६॥ सूक्ष्मायनमः ॥९६७॥ सर्व्वदेवायनमः ॥९६८॥ तपोमयायनमः ॥ ९६९ ॥ सुयुक्तायनमः ॥९७०॥ शोभनायनमः ॥९७१॥ वज्रिणेनमः ।९७२॥ प्रासानाम्प्रभवायनमः ॥ ९७३ ॥ अव्ययायनमः ॥ ९७४ ॥ गुहायनमः ॥ ९७५ ॥ कान्तायनमः ॥ ९७६ ॥ निजसर्गायनमः ॥ ९७७ ॥ पवित्रायनमः ॥ ९७८ ॥ सर्व्वपावनायनमः ॥ ९७९ ॥ शृङ्गिणेनमः ॥ ९८० ॥ शृङ्गप्रियायनमः ॥९८१॥ बभ्रवेनमः ॥ ९८२ ॥ राजराजायनमः ॥ ९८३ ॥ निरामयायनमः ॥ ९८४ ॥ अभिरामायनमः ॥ ९८५ ॥ सुरगणायनमः ॥९८६॥ विरामायनमः ॥९८७॥ सर्व्वसाधनायनमः ॥९८८॥ ललाटाक्षायनमः ॥ ९८९ ॥ विश्वदेवायनमः ॥९९०॥ हरिणायनमः ॥ ९९१ ॥ ब्रह्मवर्च्चसायनमः ॥ ९९२ ॥ स्थावरपतयेनमः ॥ ९९३ ॥ नियमेन्द्रियवर्द्धनायनमः ॥९९४॥ सिद्धार्त्थायनमः ॥ ९९५ ॥ सिद्धभूतार्त्थायनमः ॥ ९९६ ॥ अचिन्त्यायनमः ॥ ९९७ ॥ सत्यव्रतायनमः ॥ ९९८ ॥ शुचयेनमः ॥ ९९९ ॥ व्रताधिपायनमः ॥ १००० ॥ परायनमः ॥ १ ॥ ब्रह्मणेनमः ॥ २ ॥ भक्तानाम्परमागतयेनमः ॥ ३ ॥ विमुक्तायनमः ॥४॥ मुक्ततेजसेनमः ॥ ५ ॥ श्रीमतेनमः ॥ ६ ॥ श्रीवर्द्धनायनमः ॥ ७ ॥ जगतेनमः ॥८॥ इतिश्रीमन्महाभारते अनुशासनपर्व्वणि दानधर्म्मे सप्तदशाध्याये शिवसहस्रनामस्तोत्रं सम्पूर्णम् ॥ १७ ॥

श्रीसाम्बसदाशिवार्पणमस्तु ॥

## अथार्घ्यप्रदानम्

अद्य पूर्व्वोच्चरित एवङ्गुणविशेषेण विशिष्टायाम्पुण्यतिथौ ममात्मनः पुराणोक्तफलप्राप्त्यर्थं पूजासाङ्गतासिद्ध्यर्थमर्घ्यप्रदानङ्करिष्ये ॥ शिवरात्र्यर्घ्याणि ॥ नमः शिवाय शर्व्वाय सर्व्वपापहराय च ॥ शिवरात्रौ महापुण्यङ्गृहाणार्घ्यन्नमोऽस्तु ते ॥ शिवाय० इदम् ॥ १ ॥ व्योमकेश नमस्तुभ्यं व्योमात्मन्व्योमरूपिणे ॥ नक्षत्ररूपिणे तुभ्यन्तारकार्घ्यन्नमोऽस्तु ते ॥ तारकायनमः इदम्० ॥ २ ॥ आकाशादिकशरीराय ग्रहनक्षत्रमालिने ॥ सुरसिद्धनिवासाय दत्तमर्घ्यं सदाशिव ॥ सदा० इदम्० ॥ ३ ॥ अथ सोमवारार्घ्याणि ॥ सोमवारव्रतङ्कर्तुं कल्याणम्मम सर्वदा ॥ प्रसीद पार्व्वतीनाथ सायुज्यन्देहि मे प्रभो ॥ भवानीशङ्कराय नमः ॥ इदम्० ॥ १ ॥ नक्तेन सोमवारेण सोमनाथ जगत्पते ॥ अनेककोटिसौभाग्यमनन्तं कुरु शङ्कर ॥ शङ्कराय० इदम्० ॥२॥ आकाशादिकशरीराय ग्रहनक्षत्रमालिने ॥ सर्व्वसिद्धिनिवासाय दत्तमर्घ्यन्नमोऽस्तु ते ॥ सदाशिवा० इदम् ॥ ३ ॥ अनेनार्घ्यप्रदानेन भगवाञ्छ्रीभवानीशङ्करमहारुद्रः प्रीयताम् ॥ इत्यर्घ्यप्रदानम् ॥

## अथ महिम्नस्तोत्रम्

श्रीगणेशाय नमः ॥ महिम्नः पारन्ते परमविदुषो यद्यसदृशी स्तुतिर्ब्रह्मादीनामपि तदवसन्नास्त्वयि गिरः ॥ अथावाच्यः सर्व्वः स्वमतिपरिणामावधि गृणन्ममाप्येष स्तोत्रे हर निरपवादः परिकरः ॥ १ ॥ अतीतः पन्थानन्तव च महिमा वाङ्मनसयोरतद्व्यावृत्त्या यञ्चकितमभिधत्ते श्रुतिरपि ॥ स कस्य

स्तोतव्यः कतिविधगुणः कस्य विषयः पदे त्वर्वाचीने
पतति न मनः कस्य न वचः ॥ २ ॥ मधुस्फीता वाचः
परममृतन्निर्मितवतस्तव ब्रह्मन्किं वागपि सुरगुरोर्विस्मयपदम् ॥
मम त्वेतां वाणीङ्गुणकथनपुण्येन भवतः पुनामीत्यर्थेऽस्मि-
न्पुरमथन बुद्धिर्व्यवसिता ॥ ३ ॥ तवैश्वर्यं यत्तज्जगदुदयरक्षा-
प्रलयकृत्त्रयीवस्तुव्यस्तन्तिसृषु गुणभिन्नासु तनुषु ॥ अभव्या-
नामस्मिन्वरद रमणीयामरमणीं विहन्तुं व्याक्रोशीं विदधत इहैके
जडधियः ॥ ४ ॥ किमीहः किङ्कायः स खलु किमुपायस्त्रिभुवन-
ङ्किमाधारो धाता सृजति किमुपादान इति च ॥ अतर्क्यैश्वर्ये
त्वय्यनवसरदुःस्थो हतधियः कुतर्कोऽयङ्कांश्चिन्मुखरयति मोहाय
जगतः ॥ ५ ॥ अजन्मानो लोकाः किमवयववन्तोऽपि जगता-
मधिष्ठातारङ्किम्भवविधिरनादृत्य भवति ॥ अनीशो वा कुर्याद्-
भुवनजनने कः परिकरो यतो मन्दास्त्वाम्प्रत्यमरवर संशेरत
इमे ॥ ६ ॥ त्रयी साङ्ख्यं योगः पशुपतिमतं वैष्णवमिति
प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च ॥ रुचीनां वैचित्र्या-
दृजुकुटिलनानापथजुषान्नृणामेको गम्यस्त्वमसि पयसामर्णव
इव ॥ ७ ॥ महोक्षः खट्वाङ्गम्परशुरजिनम्भस्म फणिनः
कपालश्चेतीयत्तव वरद तन्त्रोपकरणम् ॥ सुरास्तान्तामृद्धिन्दधति तु
भवद्भ्रूप्रणिहितान्नहि स्वात्मारामं विषयमृगतृष्णा भ्रमयति ॥८॥
ध्रुवङ्कश्चित्सर्वं सकलमपरस्त्वध्रुवमिदम्परो ध्रौव्याध्रौव्ये जगति
गदति व्यस्तविषये ॥ समस्तेऽप्येतस्मिन्पुरमथन तैर्विस्मित इव
स्तुवञ्जिह्रेमि त्वान्न खलु ननु धृष्टा मुखरता ॥ ९ ॥ तवैश्वर्यं
यत्नाद्यदुपरि विरिञ्चो हरिरधः परिच्छेत्तुं यातावनलमनल-
स्कन्धवपुषः ॥ ततो भक्तिश्रद्धाभरगुरुगृणद्भ्यां गिरिश यत्स्वय-
न्तस्थे ताभ्यान्तव किमनुवृत्तिर्न फलति ॥ १० ॥ अयत्नादापाद्य

त्रिभुवनमवैरव्यतिकरन्दशास्यो यद्बाहूनभृत रणकण्डूपरवशान् ॥
शिर॰ पद्मश्रेणीरचितचरणाम्भोरुहबलेः स्थिरायास्त्वद्भक्तेस्त्रिपुरहर
विस्फूर्जितमिदम् ॥ ११ ॥ अमुष्य त्वत्सेवासमधिगतसारम्भुज-
वनम्बलात्कैलासेऽपि त्वदधिवसतौ विक्रमयतः ॥ अलभ्या पाताले-
ऽप्यलसचलिताङ्गुष्ठशिरसि प्रतिष्ठा त्वय्यासीद्ध्रुवमुपचितो मुह्यति
खलः ॥ १२ ॥ यदृद्धिं सुत्राम्णो वरद परमोच्चैरपि सती-
मधश्चक्रे बाण॰ परिजनविधेयस्त्रिभुवनः ॥ न तच्चित्रन्त-
स्मिन्वरिवसितरि त्वच्चरणयोर्न कस्याप्युन्नत्यै भवति शिर-
सस्त्वय्यवनतिः ॥ १३ ॥ अकाण्डब्रह्माण्डक्षयचकितदेवासुरकृपा-
विधेयस्याऽऽसीद्यस्त्रिनयनविषं संहृतवतः ॥ स कल्माष॰ कण्ठे
तव न कुरुते न श्रियमहो विकारोऽपि श्लाघ्यो भुवनभयभङ्ग-
व्यसनिनः ॥ १४ ॥ असिद्धार्था नैव क्वचिदपि सदेवासुरनरे
निवर्तन्ते नित्यञ्जगति जयिनो यस्य विशिखाः ॥ स पश्यन्नीश
त्वामितरसुरसाधारणमभूत्स्मरः स्मर्तव्यात्मा नहि वशिषु पथ्य॰
परिभवः ॥ १५ ॥ मही पादाघाताद्व्रजति सहसा संशयपदम्पदं
विष्णोर्भ्राम्यद्भुजपरिघरुग्णग्रहगणम् ॥ मुहुर्द्यौर्दौस्थ्यं यात्य-
निभृतजटाताडिततटा जगद्रक्षायै त्वन्नटसि ननु वामैव विभुता
॥ १६ ॥ वियद्व्यापी तारागणगुणितफेनोद्गमरुचिः प्रवाहो वारां
य॰ पृषतलघुदृष्टः शिरसि ते ॥ जगद्द्वीपाकारञ्जलधिवलयन्तेन
कृतमित्यनेनैवोन्नेयन्धृतमहिम दिव्यन्तव वपुः ॥ १७ ॥ रथ॰
क्षोणी यन्ता शतधृतिरगेन्द्रो धनुरथो रथाङ्गे चन्द्रार्कौ रथचरण-
पाणिः शर इति ॥ दिधक्षोस्ते कोऽयन्त्रिपुरतृणमाडम्बरविधि-
र्विधेयै॰ क्रीडन्त्यो न खलु परतन्त्रा॰ प्रभुधियः ॥ १८ ॥
हरिस्ते साहस्रङ्कमलबलिमाधाय पदयोर्यदेकोने तस्मिन्निज-
मुदहरन्नेत्रकमलम् ॥ गतो भक्त्युद्रेक॰ परिणतिमसौ चक्रवपुषा

त्रयाणां रक्षायै त्रिपुरहर जागर्त्ति जगताम् ॥ १९ ॥ क्रतौ सुप्ते जाग्रत्त्वमसि फलयोगे क्रतुमताङ्कक्कर्म्म प्रध्वस्तम्फलति पुरुषाराधनमृते ॥ अतस्त्वां सम्प्रेक्ष्य क्रतुषु फलदानप्रतिभुवं श्रुतौ श्रद्धाम्बद्ध्वा दृढपरिकर×कर्म्मसु जनः ॥ २० ॥ क्रियादक्षो दक्षः क्रतुपतिरधीशस्तनुभृतामृषीणामार्त्त्विज्यं शरणद सदस्याः सुरगणाः ॥ क्रतुभ्रंशस्त्वत्त×क्रतुफलविधानव्यसनिनो ध्रुवङ्कर्त्तुः श्रद्धाविधुरमभिचाराय हि मखाः ॥२१॥ प्रजानाथन्नाथ प्रसभमभिकं स्वान्दुहितरङ्गतं रोहिद्भूतां रिरमयिषुमृष्यस्य वपुषा ॥ धनुष्पाणेर्य्यातन्दिवमपि सपत्राकृतममुन्त्रसन्तन्तेऽद्यापि त्यजति न मृगव्याधरभसः ॥ २२ ॥ स्वलावण्याशंसा धृतधनुषमह्नाय तृणवत्पुर×प्लुष्टन्दृष्ट्वा पुरमथन पुष्पायुधमपि ॥ यदि स्त्रैणन्देवी यमनिरतदेहार्द्धघटनादवैति त्वामद्धा बत वरद मुग्धा युवतयः ॥ २३ ॥ श्मशानेष्वाक्रीडा स्मरहर पिशाचाः सहचराश्चिताभस्मालेपः स्रगपि नृकरोटी परिकरः ॥ अमङ्गल्यं शीलन्तव भवतु नामैवमखिलन्तथापि स्मर्त्तॄणां व्वरद परमम्मङ्गलमसि ॥ २४ ॥ मन×प्रत्यक्चित्ते सविधमवधायात्तमरुत×प्रहृष्यद्रोमाण×प्रमदसलिलोत्सङ्गितदृशः ॥ यदालोक्याह्लादं ह्रद इव निमज्यामृतमये दधत्यन्तस्तत्त्वङ्किमपि यमिनस्तत्किल भवान् ॥ २५ ॥ त्वमर्कस्त्वं सोमस्त्वमसि पवनस्त्वं हुतवहस्त्वमापस्त्वँ व्व्योम त्वमु धरणिरात्मा त्वमिति च ॥ परिच्छिन्नामेवन्त्वयि परिणता बिभ्रति गिरन्न विद्मस्तत्तत्त्वँ व्वयमिह तु यत्त्वन्न भवसि ॥ २६ ॥ त्रयीन्तिस्रो वृत्तीस्त्रिभुवनमथो त्रीनपि सुरानकाराद्यैर्व्वर्णैस्त्रिभिरभिदधत्तीर्णविकृति ॥ तुरीयन्ते धाम ध्वनिभिरवरुन्धानमणुभिः समस्तं व्यस्तं वा शरणद गृणात्योमिति पदम् ॥ २७ ॥ भवः शर्व्वो रुद्र×पशुपतिरथोग्रः सह महाँस्तथा

भीमेशानाविति यदभिधानाष्टकमिदम् ॥ अमुष्मिन्प्रत्येकम्प्रविचरति देव श्रुतिरपि प्रियायास्मै धाम्ने प्रणिहितनमस्योऽस्मि भवते ॥ २८ ॥ नमो नेदिष्ठाय प्रियदव दविष्ठाय च नमो नमः क्षोदिष्ठाय स्मरहर महिष्ठाय च नमः ॥ नमो वर्षिष्ठाय त्रिनयन यविष्ठाय च नमो नमः सर्व्वस्मै ते तदिदमिति सर्व्वाय च नमः ॥ २९ ॥ बहलरजसे विश्वोत्पत्तौ भवाय नमो नमः प्रबलतमसे तत्संहारे हराय नमो नमः ॥ जनसुखकृते सत्त्वोद्रिक्तौ मृडाय नमो नमः प्रमहसि पदे निस्त्रैगुण्ये शिवाय नमो नमः ॥ ३० ॥ कृशपरिणति चेतः क्लेशवश्यन्क चेदङ् क च तव गुणसीमोल्लङ्घिनी शश्वदृद्धिः ॥ इति चकितममन्दीकृत्य माम्भक्तिराधाद्वरद चरणयोस्ते वाक्यपुष्पोपहारम् ॥ ३१ ॥ असितगिरिसमं स्यात्कज्जलं सिन्धुपात्रे सुरतरुवरशाखा लेखनी पत्रमुर्व्वी ॥ लिखति यदि गृहीत्वा शारदा सर्व्वकालन्तदपि तव गुणानामीश पारन्न याति ॥३२॥ असुरसुरमुनीन्द्रैरर्च्चितस्येन्दुमौलेर्ग्रथितगुणमहिम्नो निर्गुणस्येश्वरस्य ॥ सकलगणवरिष्ठः पुष्पदन्ताभिधानो रुचिरमलघुवृत्तैः स्तोत्रमेतच्चकार ॥ ३३ ॥ अहरहरनवद्यन्धूर्जटेः स्तोत्रमेतत्पठति परमभक्त्या शुद्धचित्तः पुमान्यः ॥ स भवति शिवलोके रुद्रतुल्यस्तथात्र प्रचुरतरधनायुः पुत्रवान्कीर्तिमांश्च ॥३४॥ महेशान्नापरो देवो महिम्नो नापरा स्तुतिः ॥ अघोरान्नापरो मन्त्रो नास्ति तत्त्वङ्गुरोः परम् ॥३५॥ दीक्षा दानन्तपस्तीर्थं ज्ञानं य्यागादिकाः क्रियाः ॥ महिम्नः स्तवपाठस्य कलान्नार्हन्ति षोडशीम् ॥३६॥ आसमाप्तिमिदं स्तोत्रं सर्व्वमीश्वरवर्ण्णनम् ॥ अनौपम्यम्मनोहारि पुण्यङ्गन्धर्व्वभाषितम् ॥३७॥ कुसुमदशननामा सर्व्वगन्धर्व्वराजः शशिधरवरमौलेर्द्देवदेवस्य दासः ॥ स खलु निज-

महिम्नो भ्रष्ट एवास्य रोषात्स्तवनमिदमकार्षीद्दिव्यदिव्यम्महिम्नः ॥३८॥ सुरवरमुनिपूज्यं स्वर्गमोक्षैकहेतुम्पठति यदि मनुष्यः प्राञ्जलिर्नान्यचेताः ॥ व्रजति शिवसमीपङ्किन्नरैः स्तूयमानः स्तवनमिदममोघम्पुष्पदन्तप्रणीतम् ॥३९॥ श्रीपुष्पदन्तमुखपङ्कजनिर्गतेन स्तोत्रेण किल्बिषहरेण हरप्रियेण ॥ कण्ठस्थितेन पठितेन समाहितेन सुप्रीणितो भवति भूतपतिर्म्महेशः ॥ ४० ॥ इति श्रीपुष्पदन्तविरचितं शिवमहिमाख्यस्तोत्रं सम्पूर्णम् ॥

## अथ रावणकृतशिवस्तोत्रम्

जटाकटाहसम्भ्रमभ्रमन्निलिम्पनिर्झरीविलोलवीचिवल्लरीविराजमानमूर्द्धनि ॥ धगद्धगद्धगज्ज्वलल्ललाटपट्टपावके किशोरचन्द्रशेखरे रतिः प्रतिक्षणम्मम ॥ १ ॥ धराधरेन्द्रनन्दिनी-विलासबन्धुबन्धुरस्फुरद्दिगन्तसन्ततिप्रमोदमानमानसे॥ कृपाकटाक्षधोरणीनिरुद्धदुर्द्धरापदि क्वचिद्दिगम्बरे मनो विनोदमस्तु वस्तुनि ॥२॥ जटाभुजङ्गपिङ्गलस्फुरत्फणामणिप्रभाकदम्बकुङ्कुमद्रवप्रलिप्तदिग्वधूमुखे ॥ मदान्धसिन्धुरस्फुरत्त्वगुत्तरीयमेदुरे मनो विनोदमद्भुतम्बिभर्तु भूतभर्त्तरि ॥ ३ ॥ ललाटचत्वरज्वलद्धनञ्जयस्फुलिङ्गभानिपीतपञ्चसायकन्नमन्निलिम्पनायकम् ॥ सुधामयूखरेखया विराजमानशेखरम्महाकपालिसम्पदे सरिज्जटालमस्तु नः ॥ ४ ॥ सहस्रलोचनप्रभृत्यशेषलेखशेखरप्रसूनधूलिधोरणीविधूसराङ्घ्रिपीठभूः ॥ भुजङ्गराजमालया निबद्धजाटजूटकः श्रियै चिराय जायताञ्चकोरबन्धुशेखरः ॥ ५ ॥ करालभालपट्टिकाधगद्धगद्धगज्ज्वलद्धनञ्जयाहुतीकृतप्रचण्डपञ्चसायके ॥ धराधरेन्द्रनन्दिनीकुचाग्रचित्रपत्रकप्रकल्पनैकशिल्पिनि त्रिलोचने रतिर्म्मम ॥६॥ नवीनमेघमण्डलीनिरुद्धदुर्द्धरस्फुरत्कुहूनिशीथिनीतमःप्रबन्धबद्धकन्धरः ॥ निलिम्पनिर्झरीधरस्तनोतु कृत्तिसुन्दरः कलानिधानबन्धुरः श्रियञ्जग-

द्धुरन्धरः ॥७॥ प्रफुल्लनीलपङ्कजप्रपञ्चकालिमप्रभावलम्बिकण्ठकन्दलीरुचिप्रबधकन्धरम् ॥ स्मरच्छिदम्पुरच्छिदम्भवच्छिदङ्गजच्छिदम्मखच्छिदान्धकच्छिदन्तमन्तकच्छिदम्भजे ॥८॥ अखर्व्वसर्व्वमङ्गलाकलाकदम्बमञ्जरीरसप्रवाहमाधुरीविजृम्भणामधुव्रतम्। स्मरान्तकम्पुरान्तकम्भवान्तकम्मखान्तकङ्गजान्तकान्धकान्तकन्तमन्तकान्तकम्भजे ॥९॥ जयत्वदभ्रविभ्रमद्भ्रमद्भुजङ्गमश्वसद्विनिर्गमक्रमस्फुरत्करालभालहव्यवाट् ॥ धिमिन्धिमिन्धिमिन्ध्वनन्मृदङ्गतुङ्गमङ्गलध्वनिक्रमप्रवर्त्तितप्रचण्डताण्डवः शिवः ॥ १० ॥ दृषद्विचित्रतल्पयोर्भुजङ्गमौक्तिकस्रजोर्गरिष्ठरत्नलोष्टयोः सुहृद्विपक्षपक्षयोः ॥ तृणारविन्दचक्षुषोः प्रजामहीमहेन्द्रयोः समप्रवृत्तिकः कदा सदाशिवम्भजाम्यहम् ॥ ११ ॥ कदा निलिम्पनिर्झरीनिकुञ्जकोटरे वसन्विमुक्तदुर्म्मतिस्सदा शिरःस्थमञ्जलिं वहन् ॥ विलोललोललोचनाललामभाललग्नकः शिवेति मन्त्रमुच्चरन्सदा सुखी भवाम्यहम् ॥ १२ ॥ निलिम्पनाथनागरी-कदम्बमौलिमल्लिका-निगुम्फनिर्भरक्षरन्मधूलिकामनोहरः ॥ तनोतु नो मनो मुदं विनोदनीमहर्निशम्परश्रियः परम्पदन्तदङ्गजत्विषाञ्चयः ॥१३॥ प्रचण्डवाडवानलप्रभाशुभप्रचारिणी महाष्टसिद्धिकामिनीजनावहूतजल्पना ॥ विमुक्तवामलोचना विवाहकालिकध्वनिः शिवेतिमन्त्रभूषणा जगज्जयाय जायताम् ॥ १४ ॥ इति रावणकृतं शिवस्तोत्रं सम्पूर्णम् ॥

## अथ शिवकवचम्

अस्य श्रीशिवकवचस्तोत्रमन्त्रस्य ब्रह्मऋषिः, अनुष्टुप्छन्दः, श्रीसदाशिवरुद्रो देवता, ह्रींशक्तिः, रंकीलकम्, श्रींह्रींक्लींबीजम्, श्रीसदाशिवप्रीत्यर्थे शिवकवचस्तोत्रजपे विनियोगः ॥ अथ करन्यासः ॥ ॐ नमो भगवते ज्वलज्ज्वालामालिने ॐ रांसर्व्वशक्ति-

धाम्ने ईशानात्मने अङ्गुष्ठाभ्यान्नमः, ॐ नमो भगवते ज्वलज्ज्वालामालिने ॐ नँरीँनित्यतृप्तिधाम्ने तत्पुरुषात्मने तर्जनीभ्यान्नमः, ॐ नमो भगवते ज्वलज्ज्वालामालिने ॐ मँरूँअनादिशक्तिधाम्ने अघोरात्मने मध्यमाभ्यान्नमः, ॐ नमो भगवते ज्वलज्ज्वालामालिने ॐ शिँरैँ स्वतन्त्रशक्तिधाम्ने वामदेवात्मने अनामिकाभ्यान्नमः, ॐ नमो भगवते ज्वलज्ज्वालामालिने ॐ वाँरौँ अतुल्यशक्तिधाम्ने सद्योजातात्मने कनिष्ठाभ्यान्नमः, ॐ नमो भगवते ज्वलज्ज्वालामालिने ॐ यँरः अनादिशक्तिधाम्ने सर्व्वात्मने करतलकरपृष्ठाभ्यान्नमः, एवं हृदयादि ॥ अथ ध्यानम् ॥ वज्रदंष्ट्रन्त्रिनयनङ्कालकण्ठमरिन्दमम् ॥ सहस्रकरमत्युग्रँ व्वन्दे शम्भुमुमापतिम् ॥ १ ॥ अथापरं सर्व्वपुराणगुह्यन्निःशेषपापौघहरम्पवित्रम् ॥ जयप्रदं सर्व्वविपत्प्रमोचनँ व्वक्ष्यामि शैवङ्कवचं हिताय ते ॥ २ ॥ ऋषभ उवाच ॥ नमस्कृत्वा महादेवँ व्विश्वव्यापिनमीश्वरम् ॥ वक्ष्ये शिवमयँ व्वर्म्म सर्व्वरक्षाकरन्नृणाम् ॥ ३ ॥ शुचौ देशे समासीनो यथावत्कल्पितासनः ॥ जितेन्द्रियो जितप्राणश्चिन्तयेच्छिवमव्ययम् ॥ ४ ॥ हृत्पुण्डरीकान्तरसन्निविष्टं स्वतेजसा व्याप्तनभोवकाशम् ॥ अतीन्द्रियं सूक्ष्ममनन्तमाद्यन्ध्यायेत्परानन्दमयम्महेशम् ॥ ५ ॥ ध्यानावधूताखिलकर्म्मबन्धश्चिरञ्चिदानन्दनिमग्नचेताः ॥ षडक्षरन्याससमाहितात्मा शैवेन कुर्य्यात्कवचेन रक्षाम् ॥ ६ ॥ माम्पातु देवोऽखिलदेवतात्मासंसारकूपे पतितङ्गभीरे ॥ तन्नाम दिव्यँ व्वरमन्त्रमूलन्धुनोतु मे सर्व्वमघं हृदिस्थम् ॥ ७ ॥ सर्व्वत्र मां रक्षतु विश्वमूर्त्तिर्ज्ज्योतिर्म्मयानन्दघनश्चिदात्मा ॥ अणोरणीयानुरुशक्तिरेकः स ईश्वरः पातु भयादशेषात् ॥८॥ यो भूस्वरूपेण बिभर्त्ति विश्वम्पायात् स भूमेर्ग्गिरिशोऽष्टमूर्त्तिः ॥ योऽपांस्वरूपेण नृणाङ्करोति सञ्जीवनं सोऽव्वतु

माङ्गलेभ्यः ॥ ९ ॥ कल्पावसाने भुवनानि दग्ध्वा सर्व्वाणि यो नृत्यति भूरिलीलः ॥ स कालरुद्रोऽवतु मान्दवाग्नेर्व्वात्यादिभीतेर-खिलाच्च तापात् ॥ १० ॥ प्रदीप्तविद्युत्कनकावभासो विद्यावराभीतिकुठारपाणिः ॥ चतुर्मुखस्तत्पुरुषस्त्रिनेत्रः प्राच्यां स्थितं रक्षतु मामजस्रम् ॥ ११ ॥ कुठारखेटाङ्कुशपाशशूलकपालढक्काक्ष-गुणान्दधानः ॥ चतुर्मुखो नीलरुचिस्त्रिनेत्रः पायादघोरो दिशि दक्षिणस्याम् ॥ १२ ॥ कुन्देन्दुशङ्खस्फटिकावभासो वेदाक्षमाला-वरदाभयाङ्कः ॥ त्र्यक्षश्चतुर्व्वक्त्र उरुप्रभावः सद्योधिजातोऽवतु माम्प्रतीच्याम् ॥ १३ ॥ वराक्षमालाभयटङ्कहस्तः सरोजकिञ्जल्क-समानवर्णः ॥ त्रिलोचनश्चारुचतुर्मुखो माम्पायादुदीच्यान्दिशि वामदेवः ॥ १४ ॥ वेदाभयेष्टाङ्कुशपाशटङ्ककपालढक्काक्षकशूल-पाणिः ॥ सितद्युतिः पञ्चमुखोऽवतान्मामीशान ऊर्द्ध्वम्परम-प्रकाशः ॥१५॥ मूर्द्धानमव्यान्मम चन्द्रमौलिर्भालम्ममाव्यादथ भालनेत्रः ॥ नेत्रे ममाव्याद्भगनेत्रहारी नासां सदा रक्षतु विश्वनाथः ॥ १६ ॥ पायाच्छ्रुती मे श्रुतिगीतकीर्त्तिः कपोलमव्यात्सततं कपाली ॥ वक्त्रं सदा रक्षतु पञ्चवक्त्रो जिह्वां सदा रक्षतु वेदजिह्वः ॥ १७ ॥ कण्ठङ्गिरीशोऽवतु नीलकण्ठः पाणिद्वयम्पातु पिनाक-पाणिः ॥ दोर्म्मूलमव्यान्मम धर्म्मबाहुर्व्वक्षस्थलन्दक्षमखान्तको-ऽव्यात् ॥१८॥ ममोदरम्पातु गिरीन्द्रधन्वा मध्यम्ममाव्यान्मद-नान्तकारी ॥ हेरम्बतातो मम पातु नाभिम्पायात्कटिन्धूर्जटिरीश्वरो मे ॥ १९ ॥ ऊरुद्वयम्पातु कुबेरमित्रो जानुद्वयम्मे जगदीश्वरो-ऽव्यात् ॥ जङ्घायुगम्पुङ्गवकेतुरव्यात्पादौ ममाव्यात्सुरवन्द्यपादः ॥ २० ॥ महेश्वरः पातु दिनादियामे माम्मध्ययामेऽवतु वाम-देवः ॥ त्रियम्बकः पातु तृतीययामे वृषध्वजः पातु दिनान्त्य-यामे ॥ २१ ॥ पायान्निशादौ शशिशेखरो मां गङ्गाधरो रक्षतु

मान्निशीथे ॥ गौरीपतिः पातु निशावसाने मृत्युञ्जयो रक्षतु सर्व्वकालम् ॥ २२ ॥ अन्तःस्थितं रक्षतु शङ्करो मां स्थाणुः सदा पातु बहिःस्थितम्माम् ॥ तदन्तरे पातु पतिः पशूनां सदाशिवो रक्षतु मां समन्तात् ॥ २३ ॥ तिष्ठन्तमव्याद्भुवनैकनाथः पायाद्व्रजन्तम्प्रमथाधिनाथः ॥ वेदान्तवेद्योऽवतु मान्निषण्णम्मामव्ययः पातु शिवः शयानम् ॥ २४ ॥ मार्गेषु मां रक्षतु नीलकण्ठः शैलादिदुर्गेषु पुरत्रयारिः ॥ अरण्यवासादिमहाप्रवासे पायान्मृगव्याध उदारशक्तिः ॥ २५ ॥ कल्पान्तकाटोपपटुप्रकोपस्फुटाट्टहासोच्चलिताण्डकोशः ॥ घोरारिसेनार्ण्णवदुर्न्निवारमहाभयाद्रक्षतु वीरभद्रः ॥ २६ ॥ पत्त्यश्वमातङ्गरथावरूथसहस्रलक्षायुतकोटिभीषणम् ॥ अक्षौहिणीनां शतमाततायिनाश्छिन्द्यान्मृडो घोरकुठारधारया ॥ २७ ॥ निहन्तुदस्यून्प्रलयानलार्च्चिज्ज्वलन्त्रिशूलन्त्रिपुरान्तकस्य ॥ शार्दूलसिंहर्क्षवृकादिहिंस्रान् सन्त्रासयत्वीश धनुः पिनाकः ॥ २८ ॥ दुःस्वप्नदुःशकुनदुर्गतिदौर्म्मनस्यदुर्भिक्षदुर्व्यसनदुःसहदुर्यशांसि ॥ उत्पाततापविषभीतिमसद्ग्रहार्त्तिव्याधींश्च नाशयतु मे जगतामधीशः ॥ २९ ॥ ॐ नमो भगवते सदाशिवाय सकलतत्त्वात्मकाय सर्व्वमन्त्ररूपाय सर्व्वयन्त्राधिष्ठिताय सर्व्वतन्त्ररूपाय सर्व्वतत्त्वविदूराय ब्रह्मरुद्रावतारिणे नीलकण्ठाय पार्व्वतीमनोहरप्रियाय सोमसूर्य्याग्निलोचनाय भस्मोद्धूलितविग्रहाय महामणिमुकुटधारणाय माणिक्यभूषणाय सृष्टिस्थितिप्रलयकालरौद्रावताराय दक्षाध्वरध्वंसकाय महाकालभेदनाय मूलधारैकनिलयाय तत्त्वातीताय गङ्गाधराय सर्व्वदेवाधिदेवाय षडाश्रयाय वेदान्तसाराय ॥ त्रिवर्गसाधनायानन्तकोटिब्रह्माण्डनायकायाऽनन्त-वासुकि-तक्षक-कर्कोटकशङ्खकुलिक-पद्म-महापद्मेत्यष्टमहानागकुलभूषणाय प्रणवस्वरूपाय चिदाकाशाया-

काशादिस्वरूपाय ग्रहनक्षत्रमालिने सकलाय कलङ्करहिताय सकललोकैककर्त्रे सकललोकैकसंहर्त्रे सकललोकैकगुरवे सकललोकैकसाक्षिणे सकलनिगमगुह्याय सकलवेदान्तपारगाय सकललोकैकवरप्रदाय सकललोकैकशङ्कराय शशाङ्कशेखराय शाश्वतनिजावासाय निराभासाय निरामयाय निर्म्मलाय निर्लोभाय निर्म्मदाय निश्चिन्ताय निरहङ्काराय निरङ्कुशाय निष्कलङ्काय निर्गुणाय निष्कामाय निरुपप्लवाय निरवद्याय निरन्तराय निष्कारणाय निरातङ्काय निष्प्रपञ्चाय निस्सङ्गाय निर्द्वन्द्वाय निराधाराय नीरागाय निष्क्रोधाय निर्म्मलाय निष्पापाय निर्भयाय निर्विकल्पाय निर्भेदाय निष्क्रियाय निस्तुलाय निःसंशयाय निरञ्जनाय निरुपमविभवाय नित्यशुद्धबुद्धिपरिपूर्णसच्चिदानन्दाद्वयाय परमशान्तस्वरूपाय तेजोरूपाय तेजोमयाय जय जय रुद्र महारौद्र महावतार महाभैरव कालभैरव कल्पान्तभैरव कपालमालाधर खट्वाङ्गखड्गचर्म्मपाशाङ्कुशडमरुशूलचापबाणगदाशक्तिभिन्दिपालतोमरमुसलमुद्गरपाशपरिघभुशुण्डीशतघ्नीचक्राद्यायुधभीषणकरसहस्रमुखदंष्ट्राकरालवदन विकटाट्टहासविस्फारितब्रह्माण्डमण्डल नागेन्द्रकुण्डल नागेन्द्रहार नागेन्द्रवलय नागेन्द्रचर्म्मधर मृत्युञ्जय त्र्यम्बक त्रिपुरान्तक विश्वरूप विरूपाक्ष विश्वेश्वर वृषभवाहन विश्वतोमुख सर्व्वतो रक्ष रक्ष मा ज्वल ज्वल महामृत्युमपमृत्युभयन्नाशय नाशय, चोरभयमुत्सादयोत्सादय, विषसर्पभयं शमय शमय, चोरान्मारय मारय, मम शत्रुमुच्चाटयोच्चाटय, त्रिशूलेन विदारय विदारय, कुठारेण भिन्धि भिन्धि, खड्गेन छिन्धि छिन्धि, खट्वाङ्गेन विपोथय विपोथय, मुसलेन निष्पेषय निष्पेषय, बाणैः सन्ताडय सन्ताडय, रक्षांसि भीषय भीषय, अशेषभूतानि विद्रावय विद्रावय, कूष्माण्डवेतालमारीगणब्रह्मराक्षसगणान् सन्त्रासय सन्त्रासय, ममाभयङ्कुरु

कुरु, विनस्तम्मामाश्वासयाश्वासय, नरकमहाभयान्मामुद्धरोद्धर सञ्जीवय सञ्जीवय, क्षुत्तृड्भ्याम्मामाप्यायवाप्यायय, दुःखातुरम्मामानन्दयानन्दय, शिवकवचेन मामाच्छादयाच्छादय, मृत्युञ्जय त्र्यम्बक सदाशिव नमस्ते ॥ ऋषभ उवाच ॥ इत्येतत्कवचं शैवं वरदं व्याहृतम्मया ॥ सर्व्वबाधाप्रशमनं रहस्यं सर्व्वदेहिनाम् ॥ ३० ॥ यः सदा धारयेन्मर्त्त्यः शैवङ्कवचमुत्तमम् ॥ न तस्य जायते क्वापि भयं शम्भोरनुग्रहात् ॥ ३१ ॥ क्षीणायुः प्राप्तमृत्युर्व्वा महारोगहतोऽपि वा ॥ सद्यः सुखमवाप्नोति दीर्घमायुश्च विन्दति ॥ ३२ ॥ सर्व्वदारिद्र्यशमनं सौमङ्गल्यविवर्द्धनम् ॥ यो धत्ते कवचं शैवं स देवैरपि पूज्यते ॥३३॥ महापातकसङ्घातैर्म्मुच्यते चोपपातकैः ॥ देहान्ते मुक्तिमाप्नोति शिववर्म्मानुभावतः ॥ ३४ ॥ त्वमपि श्रद्धया वत्स शैवङ्कवचमुत्तमम् ॥ धारयस्व मया दत्तं सद्यः श्रेयो ह्यवाप्स्यसि ॥३५॥ सूत उवाच ॥ इत्युक्त्वा ऋषभो योगी तस्मै पार्थिवसूनवे ॥ ददौ शङ्खम्महारावङ्खड्गञ्चारिनिषूदनम् ॥ ३६ ॥ पुनश्च भस्म सम्मन्त्र्य तदङ्गम्परितोऽस्पृशत् ॥ गजानां षट्सहस्रस्य द्विगुणस्य बलन्ददौ ॥३७॥ भस्मप्रभावात्सम्प्राप्तबलैश्वर्य्यधृतिस्मृतिः ॥ स राजपुत्रः शुशुभे शरदर्क इव श्रिया ॥ ३८ ॥ तमाह प्राञ्जलिम्भूयः स योगी नृपनन्दनम् ॥ एष खड्गो मया दत्तस्तपो मन्त्रानुभावितः ॥३९॥ शितधारमिमं खड्गं यस्मै दर्शयसे स्फुटम् ॥ स सद्यो म्रियते शत्रुः साक्षान्मृत्युरपि स्वयम् ॥ ४० ॥ अस्य शङ्खस्य निर्ह्रादं ये शृण्वन्ति तवाहिताः ॥ ते मूर्च्छिताः पतिष्यन्ति न्यस्तशस्त्रा विचेतनाः ॥ ४१ ॥ खड्गशङ्खाविमौ दिव्यौ परसैन्यविनाशिनौ ॥ आत्मसैन्यस्वपक्षाणां शौर्य्यतेजोविवर्द्धनौ ॥४२॥ एतयोश्च प्रभावेण शैवेन कवचेन च ॥ द्विषट्सहस्रनागानाम्बलेन महतापि च

॥ ४३ ॥ भस्मधारणसामर्थ्याच्छत्रुसैन्यं विजेष्यसि ॥ प्राप्य सिंहासनमित्यङ्गोप्ताऽसि पृथिवीमिमाम् ॥ ४४ ॥ इति भद्रायुषं सम्यगनुशास्य समातृकम् ॥ ताभ्यां सम्पूजितः सोऽथ योगी स्वैरगतिर्य्ययौ ॥४५॥ इति शिवकवचं सम्पूर्णम् ॥

## अथोपनिषत्

ॐ नमश्शिवाय ॐ नमोस्तु शर्व्व शम्भो त्रिनेत्र चारुगात्र त्रैलोक्यनाथ उमापते दक्षयज्ञविध्वंसकारक सकामाङ्गनाशन घोरपापप्रणाशन महापुरुष महोग्रमूर्ते सर्व्वसत्त्वक्षयङ्कर शुभङ्कर महेश्वर त्रिशूलधर स्मरारे गुहाधामन् दिग्वासः महाशङ्खशेखर-जटाधर कपालमालाविभूषितशरीर वामचक्षुःक्षुभितदेवप्रजाध्यक्ष भगाक्ष्णोःक्षयङ्कर भीमसेननाथ पशुपते कामाङ्गदहन चत्वरवासिन् शिव महादेव ईशान शङ्कर भीमभव वृषध्वज कैटभ प्रौढ महा-नाथेश्वर भूतिरत अविमुक्तक रुद्ररुद्रेश्वर स्थाणो एकलिङ्ग कालिन्दीप्रिय श्रीकण्ठ नीलकण्ठ अपराजित रिपुभयङ्कर सन्तोषपते वामदेव अघोर तत्पुरुष महाघोर अघोरमूर्त्ते शान्त सरस्वतीकान्त सहस्रमूर्त्ते महोद्भव विभो कालाग्ने रुद्र रौद्र हर महीधरप्रिय सर्व्वतीर्थाधिवास हंस कामेश्वर केदार अधिपते परिपूर्ण मुचुकुन्द मधुनिवास कृपाणपाणे भयङ्कर विद्याराज सोमराज कामराज महीधरराजकन्याहृदब्जवसते समुद्रशायिन् गयामुख-गोकर्णब्रह्मयोने सहस्रवक्त्राक्षिचरणहाटकेश्वर नमस्ते नमस्ते ॥ इत्युपनिषत् ॥

## अथ शतनाम

शिवो महेश्वरः शम्भुः पिनाकी शशिशेखरः ॥ वामदेवो विरूपाक्षः कपर्द्दी नीललोहितः ॥ १ ॥ शङ्करः शूलपाणिश्च खट्वाङ्गी विष्णुवल्लभः ॥ शिपिविष्टोऽम्बिकानाथः श्रीकण्ठो भक्त-

वत्सलः ॥ २ ॥ भवः सर्व्वस्त्रिलोकेशः शितिकण्ठः शिवाप्रियः ॥ उग्रः कपालि कामारिरन्धकासुरसूदनः ॥३॥ गङ्गाधरो ललाटाक्षः कालकालः कृपानिधिः ॥ भीमः परशुहस्तश्च मृगपाणिर्जटाधरः ॥ ४ ॥ कैलासवासी कवची कठोरस्त्रिपुरान्तकः ॥ वृषाङ्को वृषभारूढो भस्मोद्धलितविग्रहः ॥ ५ ॥ सामप्रियः स्वरमयस्त्रयीमूर्त्तिरनीश्वरः ॥ सर्व्वज्ञः परमात्मा च सोमसूर्य्याग्निलोचनः ॥ ६ ॥ हविर्य्यज्ञमयः सोमः पञ्चवक्त्रः सदाशिवः ॥ विश्वेश्वरो वीरभद्रो गणनाथः प्रजापतिः ॥ ७ ॥ हिरण्यरेता दुर्द्धर्षो गिरीशो गिरिशोनघः ॥ भुजङ्गभूषणो भर्गो गिरिधन्वा गिरिप्रियः ॥८॥ कृत्तिवासाः पुरारातिर्भगवान्प्रमथाधिपः ॥ मृत्युञ्जयः सूक्ष्मतनुर्जगद्व्यापी जगद्गुरुः ॥ ९ ॥ व्योमकेशो महासेनजनकश्चारुविक्रमः ॥ रुद्रो भूतपतिः स्थाणुरहिर्बुध्न्यो दिगम्बरः ॥१०॥ अष्टमूर्त्तिरनेकात्मा सात्त्विकः शुद्धविग्रहः ॥ शाश्वतः खण्डपरशुरजः पाशविमोचकः ॥ ११ ॥ मृडः पशुपतिर्देवो महादेवोऽव्ययः प्रभुः ॥ पूषदन्तभिदव्यग्रो दक्षाध्वरहरो हरः ॥१२॥ भगनेत्रभिदव्यक्तः सहस्राक्षः सहस्रपात् ॥ अपवर्गप्रदोऽनन्तस्तारकः परमेश्वरः ॥ १३ ॥ इमानि दिव्यनामानि जप्यन्ते सर्व्वदा मया ॥ नाम कल्पलतेयम्मे सर्व्वाभीष्टप्रदायिनी ॥१४॥ नामान्येतानि सुभगे शिवदानि न संशयः ॥ वेदसर्व्वस्वभूतानि नामान्येतानि वस्तुतः ॥ १५ ॥ एतानि यानि नामानि तानि सर्व्वार्थदान्यतः ॥ जप्यन्ते सादरन्नित्यम्मया नियमपूर्व्वकम् ॥१६॥ वेदेषु शिवनामानि श्रेष्ठान्यघहराणि च ॥ सन्त्यनन्तानि सुभगे वेदेषु विविधेष्वपि ॥ १७ ॥ तेभ्यो नामानि सङ्गृह्य कुमाराय महेश्वरः ॥ अष्टोत्तरसहस्रन्तु नाम्नामुपदिशत्पुरा ॥ १८ ॥

इति शिवाष्टोत्तरशतनामस्तोत्रं सम्पूर्णम् ॥

# अथ सहस्रनाम

सूत उवाच ।। श्रूयतामृषयः श्रेष्ठाᳵ कथयामि यथाश्रुतम् ।।
विष्णुना प्रार्थितो येन सन्तुष्टᳵ परमेश्वरः ।।१।। तदहङ्कथयाम्यद्य
पुण्यं नाम सहस्रकम् ।। श्रीविष्णुरुवाच ।। शिवो हरो मृडो रुद्रः
पुष्करः पुष्पलोचनः ।। २ ।। अर्थिगम्यः सदाचारः शर्वः
शंभुर्महेश्वरः ।। चन्द्रापीडश्चन्द्रमौलिर्विश्वादिश्चामरेश्वरः ।। ३ ।।
वेदान्तसारसन्दोहᳵ कपाली नीललोहितः ।। ध्यानाधारोपरि-
च्छेद्यो गौरीभर्त्ता गणेश्वरः ।। ४ ।। अष्टमूर्त्तिर्विश्वमूर्त्तिस्त्रिवर्गः
स्वर्गसाधनः ।। ज्ञानगम्यो दृढप्रज्ञो देवदेवस्त्रिलोचनः ।। ५ ।।
वामदेवो महादेवᳵ पटुᳵ परिवृढो दृढः ।। विश्वरूपी विरू-
पाक्षो वागीशः शुचिमत्तरः ।। ६ ।। सर्व्वᳵ प्रमाणसँव्वादी
वृषाङ्को वृषवाहनः ।। ईशᳵ पिनाकी खट्वाङ्गी चित्रवेषश्चिरन्तनः
।। ७ ।। तमोहरो महायोगी गोप्ता ब्रह्माण्डहृज्जटी ।। कालकालᳵ
कृत्तिवासाः सुभगᳵ प्रणतात्मकः ।। ८ ।। त्रिपुण्ड्रधारी चाक्षुष्यो
दुर्व्वासाᳵ पुरशासनः ।। दिव्यायुधᳵ स्कन्दगुरुः परमेष्ठी
परात्परः ।। ९ ।। अनादिमध्यनिधनो गिरीशो गिरिबान्धवः ।।
कुबेरबन्धुः श्रीकण्ठो लोकवर्णोत्तमो मृदुः ।।१०।। समाधिवेद्यᳵ
कोदण्डी नीलकण्ठᳵ परश्वधी ।। विशालाक्षो मृगव्याधः सुरेशः
सूर्य्यतापनः ।। ११ ।। धर्म्मधामा क्षमाक्षेत्रम्भगवान्भगनेत्रभित् ।।
उग्रᳵ पशुपतिस्तार्क्ष्यᳵ प्रियभक्तᳵ प्रियँव्वदः ।। १२ ।।
दाता दयाकरो दक्षᳵ कपर्द्दी कामशासनः ।। श्मशाननिलयः
सूक्ष्मः श्मशानस्थो महेश्वरः ।। १३ ।। लोककर्त्ता मृगपतिर्म्महा-
कर्त्ता महौषधीः ।। उत्तरो गोपतिर्गोप्ता ज्ञानगम्यᳵ पुरातनः
।। १४ ।। नीतिः सुनीतिः शुद्धात्मा सोमः सोमरतः सुखी ।।
सोमपोऽमृतपः सौम्यो महाज्योतिर्म्महाद्युतिः ।। १५ ।। तेजोमयो-

ऽमृतमयोऽन्नमयश्च सुधापतिः ॥ अजातशत्रुरालोकसम्भाव्यो हव्यवाहनः ॥१६॥ लोककरो वेदकरः सूत्रकारः सनातनः ॥ महर्षि≍ कपिलाचार्य्यो विश्वदीप्तिर्व्विलोचनः ॥ १७ ॥ पिनाकपाणिर्भूदेववशगः स्वस्तिकृत्सुधीः ॥ धातृधामा धामकरः सर्व्वदः सर्वगोचरः ॥ १८ ॥ ब्रह्मसृग्विश्वसृक्सर्व्वं≍ कर्णिकारप्रिय≍ कविः ॥ शाखो विशाखो गोशाखः शिवो भिषगनुत्तमः ॥ १९ ॥ गङ्गाप्लवोदको भव्य≍ पुष्कलः स्थपतिः स्थिरः ॥ विजितात्मा विधेयात्मा भूतवाहनसारथिः ॥२०॥ सगणो गणवर्यश्च सुकीर्त्तिश्छिन्नसंशयः ॥ कामदेव≍ कामपालो भस्मोद्धूलितविग्रहः ॥ २१ ॥ भस्मप्रियो भस्मशायी कामी कान्त≍ कृतागमः ॥ समावर्त्तो निवृत्तात्मा धर्म्मपुञ्जः सदाशिवः ॥ २२ ॥ अकल्मषश्चतुर्व्वाहुर्दुरावासो दुरासदः ॥ दुर्लभो दुर्गमो दुर्गः सर्व्वायुधविशारदः ॥ २३ ॥ अध्यात्मयोगनिलयः सुतन्तुस्तन्तुवर्द्धनः ॥ शुभाङ्गो लोकसारङ्गो जगदीशो जनार्द्दनः ॥ २४ ॥ भस्मशुद्धिकरो मेरुरोजस्वी शुद्धविग्रहः ॥ असाध्यसाधुसाध्यश्च भृत्यमर्कटरूपधृक् ॥ २५ ॥ हिरण्यरेता≍ पौराणो रिपुजीवहरोचलः ॥ महाह्रदो महागर्त्तः सिद्धवृन्दारकेडितः ॥ २६ ॥ व्याघ्रचर्म्माम्बरो व्याली महाभूतो महानिधिः ॥ अमृतानुभवः श्रीमान्पाञ्चजन्य≍ प्रभञ्जनः ॥२७॥ पञ्चविंशतितत्त्वस्थः पारिजात≍ परात्परः ॥ सुलभः सुव्रतः शूरो वाङ्मयीकानिधिर्न्निधिः ॥ २८ ॥ वर्णाश्रमगुरुर्व्वर्णी शत्रुजिच्छत्रुतापनः ॥ आश्रम≍ क्षपणः क्षामो ज्ञानवानचलेश्वरः ॥ २९ ॥ प्रमाणभूतो दुर्ज्ञेयः सुपर्णो वायुवाहनः ॥ धनुर्द्धरो धनुर्व्वेदो गुणः शशिगुणाकरः ॥ ३० ॥ सत्यः सत्यपरो दीनो धर्म्माङ्गो धर्म्मसाधनः ॥ अनन्तदृष्टिरानन्दो दण्डो दमयिता दमः ॥३१॥ अभिचार्य्यो महामायो विश्वकर्मा विशारदः ॥ वीत-

रागो विनीतात्मा तपस्वी भूतवाहनः ॥३२॥ उन्मत्तवेषऽप्रच्छन्नो जितकामोऽजितप्रियः ॥ कल्पान्तप्रकृतिः कल्पः सर्व्वलोकप्रजापतिः ॥३३॥ तरस्वी तारको धीमान्प्रधानऽप्रभुरव्ययः ॥ लोकपालोऽन्तर्हितात्मा कल्पादिऽकमलेक्षणः ॥ ३४ ॥ वेदशास्त्रार्थतत्त्वज्ञो नियमो नियमाश्रयः ॥ चन्द्रः सूर्य्यः शनिऽकेतुर्व्विरागो विद्रुमच्छविः ॥ ३५ ॥ भक्तिवश्यऽपरब्रह्म मृगबाणार्प्पणो नयः ॥ अद्रिरद्र्यालयऽकान्तऽपरमात्मा जगद्गुरुः ॥३६॥ सर्व्वकामालयस्तुष्टो माङ्गल्यो मङ्गलावृतः ॥ महातपा दीर्घतपाः स्थविष्ठः स्थविरो द्रुमः ॥३७॥ अहः सँव्वत्सरो व्याप्तिः प्रमाणम्परमन्तपः ॥ सँव्वत्सरकरो मन्त्रऽप्रत्ययः सर्व्वदर्शनः ॥ ३८ ॥ अजः सर्व्वेश्वरः सिद्धो महारेता महाबलः ॥ योगी योग्यो महातेजाः सिद्धसर्व्वादिविग्रहः ॥ ३९ ॥ वसुर्व्वसुमनाः सत्यः सर्व्वपापहरो हरः ॥ सुकीर्त्तिः शोभितः श्रावी ह्यवाङ्मनसगोचरः ॥४०॥ अमृतः शाश्वतः शान्तो द्रोणहस्तऽप्रतापवान् ॥ कमण्डलुधरो धन्वी वेदाङ्गो वेदविन्मुनिः ॥ ४१ ॥ भ्राजिष्णुर्भोजनम्भोक्ता लोकनाथो दुराधरः ॥ अतीन्द्रियो महामायः सर्व्वावासश्चतुष्पथः ॥ ४२ ॥ कालयोगी महानादो महोत्साहो महाबलः ॥ महाबुद्धिर्म्महावीर्य्यो भूतचारी पुरन्दरः ॥४३॥ निशाचरऽप्रेतचारी महाशक्तिर्म्महाद्युतिः ॥ अनिर्देश्यवपुः श्रीमान्सर्व्वाचार्य्यमनोगतिः ॥ ४४ ॥ बहुश्रुतो महामायो नियतात्मा ध्रुवोऽध्रुवः ॥ तेजस्तेजोद्युतिधरो नरकः सर्व्वशासकः ॥४५॥ नृत्यप्रियो नित्यनृत्यः प्रकाशात्माप्रकाशकः ॥ स्पष्टऽक्षरो बुधो मन्त्रः समानः सारसम्प्लवः ॥ ४६ ॥ युगादिकृद्युगावर्त्तो गम्भीरो वृषवाहनः ॥ इष्टो विशिष्टः शिष्टेष्टः शरभः शरभोधनुः ॥ ४७ ॥ तीर्त्थरूपस्तीर्त्थनामा तीर्त्थदृश्यः सुती-

स्थंदः ॥ अपांनिधिरधिष्ठानं व्विजयो जयकालवित् ॥ ४८ ॥
प्रतिष्ठितः प्रमाणज्ञो हिरण्यकवचो हरिः ॥ विमोचनः सुरगणो
विद्येशो विन्दुसंश्रयः ॥ ४९ ॥ बालरूपो बलोन्मत्तो विकर्त्ता
गहनो गुहः ॥ करणङ्कारणङ्कर्त्ता सर्व्वबन्धविमोचनः ॥ ५० ॥
व्यवसायो व्यवस्थानः स्थानदो जगदादिजः ॥ गुरुदो ललितो
भेदो निवासात्मनि संस्थितः ॥ ५१ ॥ वीरेश्वरो वीरभद्रो विश्व-
रूपो विधिर्व्विराट् ॥ वीरचन्द्रो मणिर्द्धर्त्ता तीव्रानन्दो नदीश्वरः
॥ ५२ ॥ अग्न्याधारस्त्रिशूली च शिपिविष्टः शिवालयः ॥
वालखिल्यो महावीर्य्यस्तिग्मांशुर्व्वधिरः खगः ॥५३॥ अभि-
रामः सुशरणः सुब्रह्मण्यः सुधानिधिः ॥ मघवा कौशिको गोमान्
व्विरामः सर्व्वसाधनः ॥ ५४ ॥ ललाटजो विश्वदेहः सारसंसार-
चक्रभृत् ॥ अमोघो दण्डिमध्यस्थो हरिणोब्रह्मवर्च्चसः ॥ ५५ ॥
परमार्त्थः परोमायी सँम्बरो व्याघ्रकोनलः ॥ रुचिर्व्वररुचिर्व्वन्द्यो
वाचस्पतिरहर्प्पतिः ॥ ५६ ॥ रविर्व्विरोचनः स्कन्दः शास्ता
वैवस्वतोऽमरः ॥ युक्तिरुन्नतकीर्त्तिश्च सानुगश्च पुरञ्जयः ॥५७॥
कैलासाधिपतिः कान्तः सवितारविलोचनः ॥ विश्वोत्तमो वीत-
भयो विश्वभर्त्तानिवारितः ॥ ५८ ॥ नित्यो नियतकल्याणः
पुण्यश्रवणकीर्त्तनः ॥ दूरश्रवा विश्वसहो ध्येयो दुःस्वप्ननाशनः
॥ ५९ ॥ उत्तारणो दुष्कृतिहा विज्ञेयो दुःसहो भवः ॥ अनादि-
र्भूर्भुवोलक्ष्मीः किरीटी त्रिदशाधिपः ॥ ६० ॥ विश्वगोप्ता
विश्वकर्त्ता सुवीरो रुचिराङ्गदः ॥ जननो जनजन्मादिः प्रीति-
मान्नीतिमान्धवः ॥ ६१ ॥ वसिष्ठः कश्यपो भानुर्भीमो भीम-
पराक्रमः ॥ प्रणवः सत्पथाचारी महाकोशो महाधनः ॥ ६२ ॥
जन्माधिपो महादेवः सकलागमपारगः ॥ तत्त्वन्तत्त्वविदेकात्मा
विभुर्व्विष्णुर्व्विभूषणः ॥ ६३ ॥ ऋषिर्ब्राह्मण ऐश्वर्य्यो

जन्ममृत्युजरातिगः ॥ पञ्चयज्ञसमुत्पत्तिर्व्विश्वेशो विमलोदयः
॥ ६४ ॥ अनाद्यन्त आत्मयोनिर्व्वत्सलो भक्तलोकधृक् ॥
गायत्रीवल्लभः प्रांशुर्व्विश्वास≍ प्रभाकरः ॥ ६५ ॥ शिशु-
र्गिरिरतः सम्राट्सुषेणः सुरशत्रुहा ॥ अनेमिरिष्टनेमिश्च मुक्तिदो
विगतज्वरः ॥ ६६ ॥ स्वयञ्ज्योतिस्तपञ्ज्योतिरतिज्योतिर-
चञ्चलः॥ पिङ्गल≍ कपिलः श्मश्रुर्भालनेत्रस्त्रयीतनुः ॥ ६७ ॥
ज्ञानस्कन्दो महानीतिर्व्विश्वोत्पत्तिरुपप्लवः ॥ भंगी विवस्वत-
स्तत्त्वो योगपारो दिवस्पतिः॥६८॥ कल्याणगुणनामा च पापहा
पुण्यदर्शनः ॥ उदारकीर्त्तिरुद्योगी महन्मान्यश्च सत्त्वपः ॥६९॥
नक्षो मलिनकेशश्च स्वाधिष्ठानमदाश्रयः ॥ पवित्र≍ पापनाशश्च
मणिपूरो नभोगतिः ॥ ७० ॥ हृत्पुण्डरीकमासीनः शक्रः शान्तो
वृषाकपिः ॥ कृष्णो ग्रहपति≍ कृष्णः समर्थोऽनर्थनाशनः
॥ ७१ ॥ अधर्म्मशत्रुरज्ञेय≍ पुरुहूत≍ पुरुश्रुतः ॥ ब्रह्मगर्भो
बृहद्गर्भो धर्म्मधेनुर्द्धनागमः ॥ ७२ ॥ जगद्धितैषी सुगत≍
कुमार≍ कुशलागमः ॥ हिरण्यवर्णो ज्योतिष्मान्नानाभूतरतो
ध्वनिः ॥ ७३ ॥ आरोग्यो नयनाध्यक्षो विश्वामित्रो धनेश्वरः ॥
ब्रह्मज्योतिर्व्वसुर्द्धामा महाज्योतिरनुत्तमः ॥ ७४ ॥ मातामहो
मातरिश्वा नभस्वान्नागहारधृक् ॥ पुलस्त्यः पुलहोऽगस्त्यो जातू-
कर्ण्य≍ पराशरः ॥ ७५ ॥ निरावरणनिर्व्वारो वैरञ्च्यो विष्टर-
श्रवाः ॥ आत्मभूरनिरुद्धोऽत्रिर्ज्ञानमूर्त्तिर्म्महायशाः ॥ ७६ ॥
लोकवीराग्रणीर्व्वीरश्चन्द्रः सत्यपराक्रमः ॥ व्यालकल्पो महाकल्पः
कल्पवृक्ष≍ कलाधरः ॥ ७७ ॥ अलङ्करिष्णुरचलो रोचिष्णु-
र्व्विक्रमोऽम्बरः ॥ आशुः शब्दपतिर्व्वेगी प्लवनः शिखिसारथिः
॥७८॥ असंसृतिपतिः शक्रः प्रमाद≍ पादपासनः ॥ वसुश्रवा≍
कव्यवाह≍ प्रतप्तो विश्वभोजनः ॥७९॥ जप्यो जरारिः शमनो

लोहिताश्वस्तनूनपात् ॥ नभयोनिः सुनिष्पन्नः सुरभिः शिशिरात्मकः ॥ ८० ॥ वसन्तो माधवो ग्रीष्मो नभस्थो बीजवाहनः ॥ अङ्गिरागुरुरात्रेयो विमलो विश्ववाहनः ॥ ८१ ॥ पावनः पुरुजिच्छक्रस्त्रैविद्यो नरवारणः ॥ मनोबुद्धिरहङ्कारः क्षेत्रज्ञः क्षेत्रपालकः ॥ ८२ ॥ जमदग्निर्जलनिधिर्विगोलो विश्वगोलकः ॥ अघोरोऽनुत्तरो यज्ञः श्रेष्ठो निःश्रेयसालयः ॥ ८३ ॥ शैलो गगनकुन्दाभो दानवारिररिन्दमः ॥ चामुण्डाजीवकश्चारुनिःशल्यो लोककल्पधृक् ॥ ८४ ॥ चतुर्व्वेदश्चतुर्भावश्चतुरश्चतुरप्रियः ॥ आम्नायोऽथ समाम्नायस्तीर्थवेदशिवालयः ॥ ८५ ॥ बहुरूपो महारूपः सर्व्वरूपश्चराचरः ॥ नयनिर्म्मायको न्यायो न्यायगम्यो निरञ्जनः ॥ ८६ ॥ सहस्रमूर्द्धा देवेन्द्रः सर्व्वशास्त्रप्रभञ्जनः ॥ मुण्डो विरूपो विक्रान्तो दण्डी ताण्डगुणोत्तमः ॥८७॥ पिङ्गलाक्षो हयग्रीवो नीलग्रीवो निरामयः ॥ सहस्रबाहुः सर्व्वेशः शरण्यः सर्व्वलोकधृक् ॥ ८८ ॥ पद्मासनः परञ्ज्योतिः परम्पारम्परम्फलम् ॥ पद्मगर्भो महागर्भो विश्वगर्भो विचक्षणः ॥ ८९ ॥ चराचरज्ञो वरदो वरेशस्तु महास्वनः ॥ देवासुरगुरुर्देवो देवासुरनमस्कृतः ॥ ९० ॥ देवासुरमहामित्रो देवासुरमहाश्रमः ॥ देवादिदेवो देवोग्निर्देवासुरवरप्रदः ॥ ९१ ॥ देवासुरेश्वरो दिव्यो देवासुरमहेश्वरः ॥ देवदेवो महाचिन्त्यो देवतात्मात्मसम्भवः ॥ ९२ ॥ सद्योनष्टासुरव्याघ्रो देवसिंहो दिवाकरः ॥ विबुधाग्रचरः श्रेष्ठः सर्व्वदेवोत्तमोत्तमः ॥ ९३ ॥ शिवज्ञानप्रदः श्रीमाञ्छिखी श्रीपर्व्वतप्रियः ॥ वज्रहस्तः सिद्धखड्गी नरसिंहनिपातनः ॥९४॥ ब्रह्मचारी लोकचारी धर्म्मचारी धनाधिपः ॥ नन्दी नन्दीश्वरो नन्दो लग्नवृत्तिधरः शुचिः ॥ ९५ ॥ लिङ्गाध्यक्षः सुराध्यक्षो योगाध्यक्षो युगावहः ॥ स्वर्द्धामा स्वर्गतः

स्वामी स्वरः स्वरतमस्वनः ॥ ९६ ॥ बोधाध्यक्षो बीजकर्त्ता धर्म्मकृद्धर्म्मसम्भवः ॥ दम्भो लोभोऽथ वै शम्भुस्सर्व्वभूतमहेश्वरः ॥ ९७ ॥ श्मशाननिलयस्त्र्यक्षः सेतुरप्रतिमाकृतिः ॥ लोकोत्तरः स्फुटालोकस्त्र्यम्बको नागभूषणः ॥ ९८ ॥ अन्धकारिम्मर्य-द्वेषी विष्णोः स्कन्धरतात्मकः ॥ हितदश्च क्षयगुणो दक्षारिः पूष-दन्तभित् ॥९९॥ पूर्ज्जनि॒ खण्डपरशुः सकलो निष्कलो मुनिः ॥ अकालः सकलाधारः पाण्डुरांगो मृगो नगः ॥ १०० ॥ पूर्णं॒ पूरयिता पुण्यः सुकुमारः सुलोचनः ॥ साङ्गो गेयः प्रियाक्रूरः पुण्यकीर्त्तिरनामयः ॥१०१॥ मनोजवस्तीर्त्थकरो जटिलो जीविते-श्वरः ॥ जीवितान्तकरो नित्यो वसुरेता वसुप्रदः ॥ १०२ ॥ सुजातिः सत्कृतिः सिद्धिः सज्जाति॒ कालकण्टकः ॥ कलाधरो महाकालभूतः सत्यपरायणः ॥ १०३ ॥ लोकलावण्यकर्त्ता च लोकोत्तरसुखालयः ॥ तेजोमयो द्युतिधरो लोकमानाग्रणीरणुः ॥ १०४ ॥ शुचिस्मित॒ प्रसन्नात्मा अजेयो दुरतिक्रमः ॥ ज्योतिर्म्मयो नीरुजाङ्गो गङ्गाश्लिष्टो जलेश्वरः ॥१०५॥ तुम्बवीणो महाकायो विशोकः शोकनाशनः ॥ त्रिलोकपा त्रिलोकेशः सर्व्व-शुद्धिरधोक्षजः ॥ १०६ ॥ अव्यक्तलक्षणो देवो व्यक्तोऽव्यक्तो निशाम्पतिः ॥ परः शिवो वसुर्भासा सारोमा नन्दनोमयः ॥१०७॥ ब्रह्मा विष्णु॒ प्रजापालो हंसो हंसगतिर्व्वयः ॥ वेधा विधाता स्रष्टा च संहर्त्ता च चतुर्मुखः ॥ १०८ ॥ कैलासशिखरावासी सर्व्वा-वासी सदागतिः ॥ हिरण्यगर्भो द्रुहिणो भूतनाथोऽथ भूपतिः ॥ १०९ ॥ सद्योगी योगविद्योगी वरदो ब्राह्मणप्रियः ॥ देवप्रियो देवनाथो देवज्ञो देवचिन्तकः ॥ ११० ॥ विषमाक्षो विरूपाक्षो वृषभो वृषवर्द्धनः ॥ निर्म्ममो निरहङ्कारो निर्म्मोहो निरुपद्रवः ॥ १११ ॥ दर्पहा दर्पदोदृप्तः सर्व्वार्त्थपरिवर्त्तकः ॥ सहस्रजि-

स्सहस्रार्चिः स्निग्धप्रकृतिदक्षिणः ॥ ११२ ॥ भूतभव्यभवोनाथः प्रभवो भूतिनाशनः ॥ अर्थोऽनर्थो महाकोशः परकार्य्यैकपण्डितः ॥ ११३ ॥ निष्कण्टकः कृतानन्दो निर्व्याजो व्याजमर्द्दनः ॥ सत्त्ववान् सात्यकिः सत्यः कीर्त्तिस्नेहः कृतागतः ॥ ११४ ॥ अकम्पितो गुणग्राही नैकात्मा नैककर्म्मकृत् ॥ सुप्रीतः सुमुखः सूक्ष्मः सुकरो दक्षिणानिलः ॥११५॥ नन्दिस्कन्दधरो धुर्य्यः प्रकटप्रीतिवर्द्धनः ॥ अपराजितः सर्व्वसत्त्वो गोविन्दः सत्त्ववाहनः ॥११६॥ अधृतः स्वधृतः सिद्धः पूतमूर्त्तिर्य्यशोधनः ॥ वाराहशृङ्ग-धृक्छूरो बलवानेकनायकः ॥११७॥ श्रुतिप्रकाशः श्रुतिमानेकबन्धु-रनेककृत् ॥ श्रीवत्सलः शिवारम्भः शान्तभद्रः समोयशः ॥११८॥ भूयशोभूषणो भूतिर्भूतकृद्भूतिभावनः ॥ अकम्पो भक्तिकायस्तु कालहा निष्कलेश्वरः॥११९॥सत्यव्रतो महात्यागी नित्यशान्तिः परायणः ॥ परार्थवृत्तिर्व्वरदो विविक्तुस्तु विशारदः ॥ १२० ॥ शुभदः शुभकर्त्ता च शुभनामा शुभः स्वयम् ॥ अनर्थितो गुण-ग्राही अकर्त्ता कनकप्रभः ॥ १२१ ॥ स्वभावभद्रो मध्यस्थः शत्रुघ्नो विघ्ननाशनः ॥ *शिखण्डी कवची शूली जटी मुण्डी च* कुण्डली ॥ १२२ ॥ अमृत्युः सर्व्वदृक्सिंहस्तेजोराशिर्म्महामणिः ॥ असङ्ख्येयोऽप्रमेयात्मा वीर्य्यवान्वीर्य्यकोविदः ॥ १२३ ॥ वैद्यश्चैव वियोगी च सप्तवीरो मुनीश्वरः ॥ अनुक्रमो दुराधर्षो मधुरः प्रियदर्शनः ॥ १२४ ॥ सुरेशस्तारणः सर्व्वशब्दः प्रतपताङ्गतिः ॥ कालक्षयः कालकारी सुकृतिः कृतवासुकिः ॥ १२५ ॥ महेष्वासो महीभर्त्ता निष्कलङ्को निम्भृङ्खलः ॥ द्युमणि-स्तरणिर्द्धन्यः सिद्धिदः सिद्धिसाधनः ॥ १२६ ॥ विवृतः संवृत-स्तुत्यो व्यूढोरस्को महाभुजः ॥ सर्वयोनिर्न्निरातङ्को नरनारायण-प्रियः ॥ १२७ ॥ निर्लेपो निःप्रपञ्चात्मा निर्व्यङ्गो व्यङ्ग-

नाशनः ॥ स्तव्यः स्तवप्रियः स्तोता व्याप्तमूर्त्तिर्निराकुलः ॥१२८॥ निरवद्यपदोपायो विद्याराशिरसत्कृतः ॥ प्रशान्तबुद्धिरक्षुण्णः सम्प्रहा नित्यसुन्दरः ॥ १२९ ॥ पापहा दर्म्मधात्रीशः साकल्पः शर्व्वरीपतिः ॥ परमार्थगुरुद्दृष्टिः सुरैराश्रितवत्सलः ॥१३०॥ सोमो रसज्ञो रसदः सर्व्वसत्त्वावलम्बनः ॥ एवन्नाम्नां सहस्रेण तुष्टाव वृषभध्वजम् ॥ १३१ ॥ प्रार्थयामास शम्भुं वै पूजयामास शङ्करम् ॥ परीक्षार्थं हरेरीश × कमलेषु महेश्वरः ॥ १३२ ॥ गोपयामास कमलन्तदेकम्भुवनेश्वरः ॥ हृदि विचारितन्तेन कुतो वै कमलङ्गतम् ॥ १३३ ॥ यातु यातु सुखेनैव नेत्रश्चिङ्कमलन्न हि ॥ तदेव कमलङ्कृत्वा यजामि चन्द्रशेखरम् ॥ १३४ ॥ इत्येवं हृदयं ज्ञात्वा विष्णोरमिततेजसः ॥ मा मेति व्याहरन्नेव प्रादुरासीज्जगद्गुरुः ॥ १३५ ॥ यत्रैव च कृता पूजा कृष्णेन परमात्मना ॥ तस्मादवततराशु मण्डलात्पार्थिवस्य सः ॥१३६॥ यथोक्तरूपिणं शम्भुन्तेजोराशिसमुत्थितम् ॥ नमस्कृत्य पुरः स्थित्वा स्तुतिङ्कृत्वा विशेषतः ॥ १३७ ॥ प्रसन्नवदनो भूत्वा शम्भोश्च सम्मुखः स्थितः ॥ इत्थम्भूतं हरिर्द्दृष्ट्वा कोटिभास्करभूषितम् ॥१३८॥ प्रणनामीश्वरं शम्भुन्देवदेवञ्जनार्दनः ॥ तदा प्राह महादेवः प्रहसन्निव शङ्करः ॥ सम्प्रेक्ष्यमाणया विश्वङ्कृताञ्जलिपुटस्थितम् ॥ १३९ ॥ शङ्कर उवाच ॥ ज्ञातम्मयेदं सकलन्देवकार्य्यञ्जनार्दन ॥ सुदर्शनाख्यञ्चक्रञ्च ददामि तव शोभनम् ॥ १४० ॥ यद्रूपम्भवता दृष्टं सर्व्वलोकसुखावहम् ॥ हिताय सर्व्वदेवेशकृतम्भावय सुव्रत ॥ १४१ ॥ रणाजावपि संस्मृत्य देवानान्दुःखनाशनम् ॥ इष्टश्चक्रमिदं रूपमिदन्नाम सहस्रकम् ॥ १४२ ॥ ये शृण्वन्ति सदा भक्त्या सिद्धि स्यादनपायिनी ॥ एवमुक्त्वा ददौ चक्रं सूर्य्यायुतसमप्रभम् ॥ १४३ ॥

विष्णुरपि च संस्नात्वा जग्राहोदङ्मुखस्तदा ॥ नमस्कृत्य तदा देवम्पुनर्व्वचनमब्रवीत् ॥१४४॥ शृणु देव मया ध्येयम्पठनीयञ्च किम्प्रभो ॥ लोकानान्दुःखनाशार्थं व्वद त्वं लोकशङ्कर ॥ १४५ ॥ इति पृष्टस्तदा तेन सन्तुष्टस्तु शिवोऽब्रवीत् ॥ रूपन्ध्येयम्मदीयं व्वै सर्व्वानर्थविनाशनम् ॥१४६॥ अनेकदुःखनाशार्थम्पाठ्यन्नाम सहस्रकम् ॥ धार्य्यञ्चक्रं सदा मेऽद्य सर्व्वानर्थप्रशान्तये ॥ १४७ ॥ अन्ये च ये पठिष्यन्ति पाठयिष्यन्ति नित्यशः ॥ तेषां दुःखन्न स्वप्नेऽपि जायते नात्र संशयः ॥१४८॥ राज्ञाञ्च सङ्कटे प्राप्ते शतवारम्पठेद्यदि ॥ साङ्गञ्च निधिपुक्तञ्च कल्याणं लभते नरः ॥ १४९ ॥ रोगनाशकरञ्चैतद्विद्यानायकमुत्तमम् ॥ यमुद्दिश्य फलश्रेष्ठम्पठिष्यन्ति नरास्त्विह ॥ १५० ॥ लभन्ते नात्र सन्देहः फलं सत्यमनुत्तमम् ॥ मम प्रातः समुत्थाय पूजाङ्कृत्वा मदीयकम् ॥ १५१ ॥ पठते मत्समक्षं वै नित्यं सिद्धिर्न दूरतः ॥ ऐहिकां सिद्धिमासाद्य परलोकसमुद्भवाम् ॥१५२॥ प्राप्नोति पाठको नित्यम्मत्प्रसादात्सुरेश्वर ॥ सायुज्यां मुक्तिमायाति नात्र कार्य्या विचारणा ॥ १५३ ॥ एवमुक्त्वा तदा विष्णुं शङ्करः प्रीतमानसः ॥ उपस्पृश्य कराभ्यां हि उवाच शङ्करः पुनः ॥ १५४ ॥ वरदोऽस्मि सुरश्रेष्ठ वरान्वृणु यथेप्सितान् ॥ भक्त्या वशीकृतो नूनं स्तवेनानेन ते सदा ॥१५५॥ इत्युक्तो देवदेवेन देवदेवम्प्रणम्य तम् ॥ यथेदानीङ्कृपा देव क्रियते चाप्यतः परम् ॥ १५६ ॥ कार्य्या चैव विशेषेण कृपालुत्वात्त्वया प्रभो ॥ त्वयि भक्तिर्म्महादेव प्रसीद वरमुत्तमम् ॥ १५७ ॥ नान्यदिच्छामि भक्तानामार्त्तिर्नैव भवेत्प्रभो ॥ तच्छ्रुत्वा वचनन्तस्य दयावान्सुतराम्भवः ॥ १५८ ॥ परपर्श च तदा तस्मै श्रद्धां शीतांशुलक्षणः ॥ प्राह त्वेनम्महादेवः परमा-

नन्दमच्युतम् ॥१५९॥ मयि भक्तिश्च वन्द्यश्च पूज्यश्चैव सुरैरपि ॥
विश्वम्भरस्त्वदीयँ त्वँ नाम पापहरम्परम् ॥ १६० ॥ भविष्यति
न सन्देहो मत्प्रसादात्सुरोत्तम ॥ इत्युक्त्वान्तर्दधे रुद्रो भगवान्नील-
लोहितः ॥ १६१ ॥ जनार्दनोऽपि भगवान्वचनाच्छङ्करस्य च ॥
प्राप्य चक्रं शुभन्ध्यानं स्तोत्रमेतन्निरन्तरम् ॥ १६२ ॥ पपाठा-
ध्यापयामास भक्तैस्तदुपपादितम् ॥ अन्येऽपि ये पठिष्यन्ति ते
विन्दन्तु तथा फलम् ॥१६३॥ इति पृष्टं समायातं शृण्वताम्पाप-
हारकम् ॥ अतः परञ्च किं श्रेष्ठः कथयामि वचः पुनः
॥१६४॥ इति शिवसहस्रनामस्तोत्रं सम्पूर्णम् ॥

श्रीः

शिवहरराजधानीपतिश्रीराजादेवनन्दनसिंह-
बहादुरनराधिपसंगृहीतविरचित-

शाक्तप्रमोदान्तर्गतं

पञ्चदशं

# गणेशतन्त्रम्



उक्तराजगुरुवश्यपण्डितश्रीरघुराजदुबेजीद्वारा
संशोधितम्

★

तदेतत्
श्रीकृष्णदासात्मज-खेमराजेन
स्वकीये "श्रीवेंकटेश्वर" यन्त्रालये
मुद्रयित्वा प्रकाशितम्

★

शकाब्दाः १८९४, सम्वत् २०२९

मुम्बई

श्रीगणेशाय नमः

# अथ शाक्तप्रमोदः

## अथ गणेशतन्त्रम्



### अथ गणेशध्यानम्

नवरत्नमयन्द्वीपं स्मरेदिक्षुरसाम्बुधौ ॥
तद्वीचिधौतपर्यन्तम्मन्दमारुतसेवितम् ॥ १ ॥
मन्दारपारिजातादिकल्पवृक्षलताकुलम् ॥
उद्भूतरत्नच्छायाभिररुणीकृतभूतलम् ॥ २ ॥
उद्यद्दिनकरेन्दुभ्यामुद्भासितदिगन्तरम् ॥
तस्य मध्ये पारिजातवनरत्नमयं स्मरेत् ॥ ३ ॥
ऋतुभिः सेवितं षड्भिरनिशम्प्रीतिवर्द्धनैः ॥
तस्याधस्तान्महापीठे रचिते मातृकाम्बुजे ॥ ४ ॥
षट्कोणान्तस्त्रिकोणाढ्यम्महागणपतिं स्मरेत् ॥ ५ ॥
हस्तीन्द्राननमिन्दुचूडमरुणच्छायन्त्रिनेत्रं रमा-
श्लिष्टम्प्रियया सपद्मकरया स्वाङ्कस्थया सन्ततम् ॥
बीजापूरगदाधनुस्त्रिशिखियुक्चक्राब्जपाशोत्पल-
व्रीह्यग्रस्वविषाणरत्नकलशान् हस्तैर्वहन्तम्भजे ॥ ६ ॥
गण्डपालीगलद्दानपूरलालसमानसान् ॥
द्विरेफान्कर्णतालाभ्यां वारयन्तम्मुहुर्मुहुः ॥ ७ ॥
कराग्रधृतमाणिक्यकुम्भवक्त्रविनिस्सृतैः ॥
रत्नवर्षैः प्रीणयन्तं साधकम्मदविह्वलम् ॥
माणिक्यमुकुटोपेतं रत्नाभरणभूषितम् ॥ ८ ॥

## अथ यन्त्रोद्धारः

षट्कोणश्च त्रिकोणश्च तद्बहिः अन्यत्सर्वम्मातृकायन्त्रवत् ।



## अथ मन्त्रोद्धारः

श्रीशक्तिस्मरभूविघ्नबीजानि प्रथमं न्यसेत् ॥ ङेन्तङ्गणपतिम्प-

[redacted]
ाशाङ्कुशधरन्देवम्मोदकान्बिभ्रतङ्करैः ॥ रक्तपुष्पमयीम्मालाङ्कण्ठे
स्ते परां शुभाम् ॥ भक्तानां वरदं सिद्धिबुद्धिभ्यां सेवितं
पदा ॥ सिद्धिबुद्धिप्रदं नृणान्धर्म्मार्थकाममोक्षदम् ॥ ब्रह्मरुद्र-

हरीन्द्राद्यैस्संस्तुतम्परमर्षिभिः ॥ इति ध्यानम् ॥ अथावाहनम् ॥ आगच्छ जगदाधार सुरासुरवरार्च्चित ॥ अनाथनाथ सर्व्वज्ञ गीर्व्वाणपरिपूजित ॥ इत्यावाहनम् ॥ अथासनम् ॥ स्वर्णसिंहासनन्दिव्यन्नानारत्नसमन्वितम् ॥ समर्प्पितम्मया देव तत्र त्वं समुपाविश ॥ इत्यासनम् ॥ अथ पाद्यम् ॥ देवदेवेश सर्व्वेश सर्व्वतीर्त्थाहृतञ्जलम् ॥ पाद्यङ्गृहाण गणपते गन्धपुष्पाक्षतैर्युतम् ॥ इति पाद्यम् ॥ अथार्घ्यम् ॥ प्रवालमुक्ताफलपूगरत्नन्ताम्बूलजाम्बूनदमष्टगन्धम् ॥ पुष्पाक्षतायुक्तममोघशक्ते दत्तम्मयार्घ्यं सफलीकुरुष्व ॥ इत्यर्घ्यम् ॥ अथाचमनीयम् ॥ गङ्गादिसर्व्वतीर्त्थेभ्यः प्रार्त्थितन्तोयमुत्तमम् ॥ कर्प्पूरैलालवङ्गादिवासितं स्वीकुरु प्रभो ॥ इत्याचमनीयम् ॥ चम्पकाशोकबकुलमालतीमल्लिकादिभिः ॥ वासितं स्निग्धताहेतुन्तैलञ्चारु प्रगृह्यताम् ॥ इति तैलम् ॥ अथ दुग्धस्नानम् ॥ कामधेनुसमुद्भूतं सर्व्वेषाञ्जीवनम्परम् ॥ पावनं यज्ञहेतुन्ते पयः स्नानात्र्थमर्प्पितम् ॥ इति दुग्धस्नानम् ॥ अथ दधिस्नानम् ॥ धेनुदुग्धसमुद्भूतं शुद्धं सर्व्वगतं प्रियम् ॥ मयानीतन्दधि वरं स्नानार्त्थम्प्रतिगृह्यताम् ॥ इति दधिस्नानम् ॥ अथ घृतस्नानम् ॥ नवनीतसमुत्पन्नं सर्व्वसन्तोषकारणम् ॥ यथाङ्गन्देवताहारङ्घृतं स्नातुं समर्प्पितम् ॥ इति घृतस्नानम् ॥ अथ मधुस्नानम् ॥ रक्तसारघमम्भूतं सर्व्वतेजोविवर्द्धनम् ॥ सर्व्वपुष्टिकरन्देव मधु स्नानार्त्थमर्प्पितम् ॥ इति मधुस्नानम् ॥ अथ शर्करास्नानम् ॥ इक्षुसारसमुद्भूतां शर्करां सुमनोहराम् ॥ मलापहारिणीं स्नातुङ्गृहाण त्वम्मयार्प्पिताम् ॥ इति शर्करास्नानम् ॥ अथ गुडस्नानम् ॥ सर्व्वमाधुर्य्यताहेतुस्स्वादुसर्व्वप्रियङ्करः ॥ पुष्टिकृत्स्नातुमानीत इक्षुसारभवो गुडः ॥ इति गुडस्नानम् ॥ अथ मधुपर्कः ॥

कांस्ये कांस्येन पिहितो दधिमध्वाज्यपूरितः ॥ मधुपर्को मयानीत: पूजार्थम्प्रतिगृह्यताम् ॥ इति मधुपर्कः ॥ अथ शुद्धोदकस्नानम् ॥ सर्व्वतीर्थाहृतन्तोयम्मया प्रार्थनया विभो ॥ सुवासितङ्गृहाणेदं सम्यक् स्नातुं सुरेश्वर ॥ इति शुद्धोदकस्नानम् ॥ अथ वस्त्रम् ॥ रक्तवस्त्रयुगन्देव लोकलज्जानिवारणम् ॥ अनर्घ्यमतिसूक्ष्मञ्च गृहाणेदम्मयार्पितम् ॥ इति वस्त्रम् ॥ अथोपवीतम् ॥ राजतम्ब्रह्मसूत्रञ्च काञ्चनं रक्तसंय्युतम् ॥ भक्त्योपपादितन्देव गृहाण परमेश्वर ॥ इति यज्ञोपवीतम् ॥ अथ भूषणम् ॥ अनेकरत्नयुक्तानि भूषणानि बहूनि च ॥ तत्तदङ्गे काञ्चनानि योजयामि तवाज्ञया ॥ इति भूषणानि ॥ अथ चन्दनम् ॥ अष्टगन्धसमायुक्तं रक्तचन्दनमुत्तमम् ॥ द्वादशाङ्गेषु ते देव लेपयामि कृपाङ्कुरु ॥ इति चन्दनम् ॥ अथाक्षताः ॥ रक्तचन्दनसंमिश्रांस्तन्दुलांस्तिलकोपरि ॥ शोभार्थं सम्प्रदास्यामि गृहाण परमेश्वर ॥ इत्यक्षताः ॥ अथ पुष्पाणि ॥ पाटलङ्कर्णिकारञ्च बन्धूकं रक्तपङ्कजम् ॥ मोगरम्मालतीपुष्पङ्गृहाण सुमनोहरम् ॥ इति पुष्पाणि ॥ अथ धूपः ॥ दशाङ्गङ्गुग्गुलन्धूपं सर्व्वसौगन्ध्यकारकम् ॥ सर्व्वपापक्षयकरन्त्वङ्गृहाण मयार्पितम् ॥ इति धूपः ॥ अथ दीपः ॥ सर्व्वज्ञ सर्व्वलोकेश तमोनाशनमुत्तमम् ॥ गृहाण मङ्गलन्दीपन्देवदेव नमोऽस्तु ते ॥ इति दीपः ॥ अथ नैवेद्यानि ॥ नानापक्वान्नसंय्युक्तम्पायसं शर्करान्वितम् ॥ नानाव्यञ्जनशोभाढ्यं शाल्योदनमनुत्तमम् ॥ दधिदुग्धघृतैर्य्युक्तं लवङ्गैलासमन्वितम् ॥ मरीचिचूर्णसहितकथिकावटकान्वितम् ॥ राजिकाधान्यसंय्युक्तम्मेथीपिष्टं स-तक्रकम् ॥ हिङ्गु-जीरक-कूष्माण्ड-म्मरीचि-माष-पिष्टकैः ॥ सम्पादितैः सुपर्कैश्च भर्जितैर्व्वटकैर्य्युतम् ॥ मोदकापूप-लड्डुक-शष्कुली-मण्डका-

शाद्वरान्ते वरदम्परम् ॥ उक्त्वा सर्व्वजनम्मेन्ते वशमानय ठद्वयम् ॥ अष्टाविंशत्यक्षरोयन्तारायो मनुरीरितः ॥

### अथ मन्त्रः

ॐ श्रीं ह्रीं क्लीं ग्लौं गंगणपतये वरवरद सर्व्वजनम्मे वश-मानय ठः ठः ॥

## अथ पूजाप्रयोगः

प्रातः कृत्यादि पीठन्यासान्तं विधाय पूर्व्वोक्तपीठशक्ती-र्विन्यस्य ॥ तद्यथा ॥ केशरेषु मध्ये च ॥ तीव्रायै० ज्वालिन्यै० नन्दायै० भोगदायै० कामरूपिण्यै० उग्रायै० तेजोवत्यै० सत्यायै० विघ्ननाशिन्यै० तदुपरि मध्ये सर्व्वशक्तिकमलासनाय नमः ॥ सर्व्वत्र प्रणवादि नमोऽन्तेन पूजयेत् ॥ तत ऋष्यादिन्यासमा-चरेत् ॥ शिरसि गणकऋषयेनमः ॥ मुखे निचृद्गायत्रीच्छन्दसे नमः ॥ हृदि गणपतयेदेवतायैनमः ॥ ततः कराङ्गन्यासौ ॥ ॐ श्रींह्रींक्लींग्लौंगंगां अङ्गुष्ठाभ्यान्नमः ॥ ॐ श्रींह्रींक्लींग्लौंगंगीं तर्ज्जनीभ्यांस्वाहा ॥ ६ ॥ एवं गूंमध्यमाभ्यां वषट् ॥ ६ ॥ गैं अनामिकाभ्यां हुम् ॥ गौं कनिष्ठाभ्यांवषट् ॥६॥ गः करतल-करपृष्ठाभ्याम्फट् ॥ एवं हृदयादिषु ॥ केचित्तु ॐ गांहृदयाय-नमः श्रींगींशिरसेस्वाहेति तत्तत्पद्बीजस्थस्वरबीजेन दीर्घभाजा प्रकल्पयेत् ॥ इति वचनाद्विशिष्टस्यैव ग्रहणात् ॥

## अथ षोडशोपचारक्रमेण पूजाविधिः

अथ ध्यानम् ॥ एकदन्तं शूर्पकर्णङ्गजवक्त्रञ्चतुर्भुजम् ॥ पाशाङ्कुशधरन्देवम्मोदकान्बिभ्रतङ्करैः ॥ रक्तपुष्पमयीम्मालाङ्कण्ठे हस्ते परां शुभाम् ॥ भक्तानां वरदं सिद्धिबुद्धिभ्यां सेवितं सदा ॥ सिद्धिबुद्धिप्रदं नृणान्धर्म्मार्थकाममोक्षदम् ॥ ब्रह्मरुद्र-

हरीन्द्राद्यैस्संस्तुतम्परमर्ष्पिभिः ॥ इति ध्यानम् ॥ अथावाहनम् ॥ आगच्छ जगदाधार सुरासुरवरार्च्चित ॥ अनाथनाथ सर्व्वज्ञ गीर्व्वाणपरिपूजित ॥ इत्यावाहनम् ॥ अथासनम् ॥ स्वर्णसिंहासनन्दिव्यन्नानारत्नसमन्वितम् ॥ समर्प्पितम्मया देव तत्र त्व समुपाविश ॥ इत्यासनम् ॥ अथ पाद्यम् ॥ देवदेवेश सर्व्वेश सर्व्वतीर्त्थाहृतञ्जलम् ॥ पाद्यङ्गृहाण गणपते गन्धपुष्पाक्षतैर्युतम् ॥ इति पाद्यम् ॥ अथार्घ्यम् ॥ प्रवालमुक्ताफलपूगरत्नन्ताम्बूलजाम्बूनदमष्टगन्धम् ॥ पुष्पाक्षतायुक्तममोघशक्ते दत्तम्मयार्घ्यं सफलीकुरुष्व ॥ इत्यर्घ्यम् ॥ अथाचमनीयम् ॥ गङ्गादिसर्व्वतीर्त्थेभ्यः प्रार्त्थितन्तोयमुत्तमम् ॥ कर्प्पूरैलालवङ्गादिवासितं स्वीकुरु प्रभो ॥ इत्याचमनीयम् ॥ चम्पकाशोकबकुलमालतीमल्लिकादिभिः ॥ वासितं स्निग्धताहेतुन्तैलञ्चारु प्रगृह्यताम् ॥ इति तैलम् ॥ अथ दुग्धस्नानम् ॥ कामधेनुसमुद्भूतं सर्व्वेषाञ्जीवनम्परम् ॥ पावन यज्ञहेतुन्ते पयः स्नानार्त्थमर्प्पितम् ॥ इति दुग्धस्नानम् ॥ अथ दधिस्नानम् ॥ धेनुदुग्धसमुद्भूत शुद्धं सर्व्वगत प्रियम् ॥ मयानीतन्दधि वरं स्नानार्त्थम्प्रतिगृह्यताम् ॥ इति दधिस्नानम् ॥ अथ घृतस्नानम् ॥ नवनीतसमुत्पन्न सर्व्वसन्तोषकारणम् ॥ यथाङ्गन्देवताहारङ्घृत स्नातु समर्प्पितम् ॥ इति घृतस्नानम् ॥ अथ मधुस्नानम् ॥ रक्तसारघमम्भूत सर्व्वतेजोभिवर्द्धनम् ॥ सर्व्वपुष्टिकरन्देव मधु स्नानार्त्थमर्प्पितम् ॥ इति मधुस्नानम् ॥ अथ शर्करास्नानम् ॥ इक्षुसारसमुद्भूता शर्करा सुमनोहराम् ॥ मलापहारिणी स्नातुङ्गृहाण त्वम्मयार्प्पिताम् ॥ इति शर्करास्नानम् ॥ अथ गुडस्नानम् ॥ सर्व्वमाधुर्य्यताहेतुस्स्वादुसर्व्वप्रियङ्कर ॥ पुष्टिकृत्स्नातुमानीत इक्षुसारभवो गुडः ॥ इति गुडस्नानम् ॥ अथ मधुपर्कः ॥

कांस्ये कांस्येन पिहितो दधिमध्वाज्यपूरितः ॥ मधुपर्को मयानीत॰ पूजार्थम्प्रतिगृह्यताम् ॥ इति मधुपर्कः ॥ अथ शुद्धोदकस्नानम् ॥ सर्व्वतीर्थाहृतन्तोयम्मया प्रार्थनया विभो ॥ सुवासितङ्गृहाणेदं सम्यक् स्नातुं सुरेश्वर ॥ इति शुद्धोदकस्नानम् ॥ अथ वस्त्रम् ॥ रक्तवस्त्रयुगन्देव लोक-लज्जानिवारणम् ॥ अनर्घ्यमतिसूक्ष्मञ्च गृहाणेदम्मयार्पितम् ॥ इति वस्त्रम् ॥ अथोपवीतम् ॥ राजतम्ब्रह्मसूत्रञ्च काञ्चनं रक्त-संयुतम् ॥ भक्त्योपपादितन्देव गृहाण परमेश्वर ॥ इति यज्ञो-पवीतम् ॥ अथ भूषणम् ॥ अनेकरत्नयुक्तानि भूषणानि बहूनि च ॥ तत्तदङ्गे काञ्चनानि योजयामि तवाज्ञया ॥ इति भूषणानि ॥ अथ चन्दनम् ॥ अष्टगन्धसमायुक्तं रक्तचन्द-नमुत्तमम् ॥ द्वादशाङ्गेषु ते देव लेपयामि कृपाकुरु ॥ इति चन्दनम् ॥ अथाक्षताः ॥ रक्तचन्दनसंमिश्रांस्तन्दुलांस्तिलको-परि ॥ शोभायै सम्प्रदास्यामि गृहाण परमेश्वर ॥ इत्यक्षताः ॥ अथ पुष्पाणि ॥ पाटलङ्कर्णिकारञ्च बन्धूकं रक्तपङ्कजम् ॥ मोगर-म्मालतीपुष्पङ्गृहाण सुमनोहरम् ॥ इति पुष्पाणि ॥ अथ धूपः ॥ दशाङ्गङ्गुग्गुलन्धूपं सर्व्वसौगन्ध्यकारकम् ॥ सर्व्वपापक्षयकरन्त्वङ्-गृहाण मयार्पितम् ॥ इति धूपः ॥ अथ दीपः ॥ सर्व्वज्ञ सर्व्व-लोकेश तमोनाशनमुत्तमम् ॥ गृहाण मङ्गलन्दीपन्देवदेव नमोऽस्तु ते ॥ इति दीपः ॥ अथ नैवेद्यानि ॥ नानापक्वान्नसंय्युक्तम्पायसं शर्करान्वितम् ॥ नानाव्यञ्जनशोभाढ्यं शाल्योदनमनुत्तमम् ॥ दधिदुग्धघृतैर्य्युक्तं प्रवरैलामसमन्वितम् ॥ मरीचिचूर्णसहित-क्वथिकावटकान्वितम् ॥ राजिकाधान्यसंय्युक्तम्मेथीपिष्टं स-तक्र-कम् ॥ हिङ्गु-जीरक-कूष्माण्ड-म्मरीचि-माष-पिष्टकैः ॥ सम्पादितैः सुपर्कैश्च भर्जितैर्व्वटकैर्य्युतम् ॥ मोदकापूप-लड्डुक-शष्कुली-मण्डका-

दिभिः ॥ पर्प्पटैरपि संय्युक्तन्नैवेद्यममृतान्वितम् ॥ हरिद्रा-हिङ्गु-लवणसहितं सूपमुत्तमम् ॥ स-सामुद्रङ्गृहाणेदम्भोजनङ्कुरु सादरम् ॥ इति नैवेद्यानि ॥ अथाचमनीयम् ॥ सुतृप्तिकारकन्तोयं सुगन्धञ्च पिबेच्छया ॥ त्वयि तृप्ते जगत्तृप्तन्नित्यतृप्ते महात्मनि ॥ उत्तरापोशनार्त्थन्ते ददामि तोयं सुवासितम् ॥ मुखपाणिविशुद्धयर्त्थम्पुनस्तोयन्ददामि ते ॥ इत्याचमनीयम् ॥ अथ फलानि ॥ दाडिमम्मधुरन्निम्बु-जम्ब्वाम्र-पनसादिकम् ॥ द्राक्षा-रम्भाफलम्पक्कङ्कर्कन्धू॰ खार्जुरम्फलम् ॥ नारिकेलञ्च नारिङ्गमञ्जिरञ्जम्बिरन्तथा । उर्व्वारुकञ्च देवेश फलान्येतानि गृह्यताम् ॥ इति फलानि ॥ अथ साचमनीयङ्करोद्वर्त्तनादिकम् ॥ मुखपाणिविशुद्धयर्त्थम्पुनस्तोयन्ददामि ते ॥ गृहाण चन्दनञ्चारु कराङ्गोद्वर्त्तनं शुभम् ॥ नानापरिमलद्रव्यैर्निर्म्मितञ्चूर्णमुत्तमम् ॥ सुगन्धिनामकम्पुण्यं गन्धि चारु प्रगृह्यताम् ॥ इति करोद्वर्त्तनम् ॥ अथ सिन्दूरम् ॥ चारुशाल्मलसम्भूतँ व्वंशसारसमुद्भवम् ॥ सीमन्तभूषणञ्चूर्णँ द्राक्षारञ्जितमस्तु ते ॥ इति सिन्दूरम् ॥ अथ ताम्बूलम् ॥ सचन्द्रपूगचूर्णाढ्यङ्काद्यखादिरसँय्युतम् ॥ एलालवङ्गसंमिश्रन्ताम्बूलङ्के सरान्वितम् ॥ इति ताम्बूलम् ॥ अथ द्रव्यम् ॥ न्यूनातिरिक्तापूजायाः सम्पूर्णफलहेतवे ॥ दक्षिणाङ्काञ्चनीन्देव स्थापयामि तवाग्रतः ॥ इति दक्षिणा ॥ अथ माला ॥ सितपीतैस्तथा रक्तैर्ज्जलजै॰ कुसुमैः शुभैः ॥ ग्रथितां सुन्दराम्मालाङ्गृहाण परमेश्वर ॥ इति माला ॥ अथ दूर्व्वाः ॥ हरितास्श्वेतवर्ण्णा या पञ्चत्रिपत्रसँय्युताः ॥ दूर्वाङ्कुरा मया दत्ता एकविंशतिसम्मिताः ॥ इति दूर्व्वाः ॥ अथ प्रदक्षिणा ॥ एकविंशतिसङ्ख्याकाः कुर्य्यां देव प्रदक्षिणाः ॥ पदे पदे ते देवेश नश्यन्तु पातकानि मे ॥ इति प्रदक्षिणा ॥ अथारार्त्तिकम् ॥ औदुम्बरे राजते वा कांस्ये काञ्चन-

सम्भवे ॥ पात्रे प्रकल्पितान्दीपान्गृहाण चतुरर्पकान् ॥ पञ्चारात्रिम्यस्त्वदीपर्दीपितान्परमेश्वरः ॥ चारु चन्द्रनिभं दीपङ्गृहाण वीचिनारणम् ॥ यथास्यनेस्यते भस्म तथा पापं विनाशय ॥ इत्यारार्तिकम् ॥

इति पूजाविधिः

## अथ गणेशस्तवराजः

ॐतत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि ॥ तन्नो दन्ति प्रचोदयात् ॥ ॐकारमाद्यम्प्रवदन्ति सन्तो वाचः श्रुतीनामपि यङ्गृणन्ति ॥ गजाननन्देवगणानताङ्घ्रिम्भजेऽहमर्द्धेन्दुकृतावतंसम् ॥ पादारविन्दार्च्चनतत्पराणां संसारदावानलभङ्गदक्षम् ॥ निरन्तरान्निर्गतदानतोयैस्तन्नौमि विघ्नेश्वरमम्बुदाभम् ॥ कृताङ्गरागन्नवकुङ्कुमेन मत्तालिजालम्मदपङ्कलग्नम् ॥ निवारयन्तन्निजकर्णतालैः को विस्मरेत्पुत्रमनङ्गशत्रोः ॥ शम्भोर्ज्जटाजूटनिवासिगङ्गाजलं समानीय कराम्बुजेन ॥ लीलाभिराराच्छिवमर्च्चयन्तङ्गजाननम्भक्तियुता भजन्ति ॥ कुमारमुक्तौ पुनरात्महेतोः पयोधरौ पर्व्वतराजपुत्र्याः ॥ प्रक्षालयन्तङ्करशीकरेण मौग्ध्येन तन्नागमुखम्भजामि ॥ तया समुद्धृत्य गजस्य हस्तं ये शीकराः पुष्कररन्ध्रमुक्ताः ॥ व्योमाङ्गणे ते विचरन्ति ताराः कालात्मना मौक्तिकतुल्यभासः ॥ क्रीडारते वारिनिधौ गजस्ये वेलामतिक्रामति वारिपूरे ॥ कल्पावसानम्परिचिन्त्य देवाः कैलासनाथं श्रुतिभिः स्तुवन्ति ॥ नागानने नागकृतोत्तरीये क्रीडारते देवकुमारसङ्घैः ॥ त्वयि क्षणङ्कालगतिं विहाय तौ प्रापतुः कन्दुकतामिनेन्दू ॥ मदोल्लसत्पञ्चमुखैरजस्रमध्यापयन्तं सकलागमार्थम् ॥ देवानृषीन्भक्तजनैकमित्रं हेरम्बमर्कारुणमाश्रयामि ॥ पादाम्बुजाभ्यामति वामनाभ्याङ्कृतार्थयन्तङ्कृपया धरित्रीम् ॥

अकारणङ्कारणमाप्तवाचान्तन्नागवक्त्रन्न जहाति चेतः ॥ येनार्पितं सत्यवतीसुताय पुराणमालिख्य विषाणकोट्या ॥ तच्चन्द्रमौलेस्तनयन्तपोभिराराध्यमानन्दघनम्भजामि ॥ पदं श्रुतीनाम पदं स्तुतीनां ल्लीलावतारम्परमात्ममूर्त्तेः ॥ नागात्मकँ व्वा पुरुषात्मकँ व्वा त्वभेदमाद्यम्भज विघ्नराजम् ॥ पाशाङ्कुशौ भग्नरदन्त्वभीष्टङ्करैर्दधानङ्कररन्ध्रमुक्तैः ॥ मुक्ताफलाभैः पृथुशीकरौघैः सिञ्चन्तमङ्गं शिवयोर्भजामि ॥ अनेकमेकङ्गजमेकदन्तञ्चैतन्यरूपञ्जगदादिबीजम् ॥ ब्रह्मेति यँ व्वेदविदो वदन्ति तं शंभुसूनुं सततम्भजामि ॥ स्वाङ्कस्थिताया निजवल्लभाया मुखाम्बुजालोकनलोलनेत्रम् ॥ स्मेराननाब्जम्मदवैभवेन रुद्धम्भजे विश्वविमोहनन्तम् ॥ ये पूर्व्वमाराध्य गजाननन्त्वां सर्व्वाणि शास्त्राणि पठन्ति तेषा म् ॥ त्वत्तो न चान्यत्प्रतिपाद्यमेतैस्तदस्ति चेत्सर्व्वमसत्यकल्पम् ॥ हिरण्यवर्णाञ्जगदीशितारङ्कविम्पुराणं रविमण्डलस्थम् ॥ गजाननँ य्यम्प्रविशन्ति सन्तस्तत्कालयोगैस्तमहम्प्रपद्ये ॥ वेदान्तगीतम्पुरुषम्भजेऽहमात्मानमानन्दघनं हृदिस्थम् ॥ गजाननँ य्यन्महसा जनानाँ व्विघ्नान्धकारो विलयम्प्रयाति ॥ शम्भोस्समालोक्य जटाकलापे शशाङ्कखण्डन्निजपुष्करेण ॥ सुभग्नदन्तम्प्रविचिन्त्य मौग्ध्यादाक्रष्टुकामः श्रियमातनोतु ॥ विघ्नार्गलानाँ व्विनिपातनार्थं य्यन्नारिकेलैः कदलीफलाद्यैः ॥ प्रसारयन्तम्मदवारणास्यम्प्रभुं सदाभीष्टमहम्भजे यम् ॥ यज्ञैरनेकैर्व्वहुभिस्तपोभिराराध्यमाद्यङ्गजराजवक्त्रम् ॥ स्तुत्याऽनया ये विधिवत्स्तुवन्ति ते सर्व्वलक्ष्मीनिलया भवन्ति ॥ इति गणेशस्तवराजः समाप्तः ॥

## अथ कवचम्

ईश्वर उवाच ॥ शृणु वक्ष्यामि कवचं सर्व्वसिद्धिकरम्प्रिये ॥

पठित्वा पाठयित्वा च मुच्यते सर्व्वसङ्कटात् ॥ अज्ञात्वा कवचन्देवि गणेशस्य मनुञ्जपेत् ॥ सिद्धिर्न्न जायते तस्य कल्पकोटिशतैरपि ॥ ॐ आमोदश्च शिरः पातु प्रमोदश्च शिखोपरि ॥ सम्मोदो भ्रूयुगे पातु भ्रूमध्ये च गणाधिपः ॥ गणक्रीडश्चक्षुर्युगन्नासायाङ्गणनायकः ॥ गणक्रीडान्वितः पातु वदने सर्व्वसिद्धये ॥ जिह्वायां सुमुखः पातु ग्रीवायान्दुर्म्मुखः सदा ॥ विघ्नेशो हृदये पातु विघ्ननाथश्च वक्षसि ॥ गणानान्नायकः पातु बाहुयुग्मे सदा मम ॥ विघ्नकर्त्ता च उदरे विघ्नहर्त्ता च लिङ्गके ॥ गजवक्त्रः कटीदेशे एकदन्तो नितम्बके ॥ लम्बोदरः सदा पातु गुह्यदेशे ममारुणः ॥ व्यालयज्ञोपवीती माम्पातु पादयुगे सदा ॥ जापकः सर्व्वदा पातु जानुजङ्घे गणाधिपः ॥ हारिद्रः सर्व्वदा पातु सर्व्वाङ्गे गणनायकः ॥ य इदम्प्रपठेन्नित्यङ्गणेशस्य महेश्वरि ॥ कवचं सर्व्वसिद्धाख्यं सर्व्वविघ्नविनाशनम् ॥ सर्व्वसिद्धिकरं साक्षात् सर्व्वपापविमोचनम् ॥ सर्व्वसम्पत्प्रदं साक्षात्सर्व्वशत्रुक्षयङ्करम् ॥ ग्रहपीडा ज्वरा रोगा ये चान्ये गुह्यकादयः ॥ पठनाद्धारणादेव नाशमायान्ति तत्क्षणात् ॥ धनधान्यकरन्देवि कवचं सुरपूजितम् ॥ समो नास्ति महेशानि त्रैलोक्ये कवचस्य च ॥ हारिद्रस्य महेशानि कवचस्य च भूतले ॥ किमन्यैरसदालापैर्य्यत्रायुर्व्ययतामियात् ॥ इति विश्वसारतन्त्रे गणेशकवचं समाप्तम् ॥

## अथोपनिषत्

ॐ लंस्वाहा नाववतु स्वाहा नौ भुनक्तु स्वाहा वीर्यं करवावहै ॥ तेजस्विनावधीतमस्तु मा विद्विषावहै ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ ॐ लंनमस्ते गणपतये ॥ त्वमेव प्रत्यक्षं तत्त्वमसि ॥ त्वमेव केवलं कर्त्तासि ॥ त्वमेव केवलन्धर्त्तासि ॥ त्वमेव केवलं

